तेऽनुभावाः प्रकीर्त्यन्ते विभावा अङ्गसम्भवाः ।
सत्वं नाम मनोवृत्तिः सात्विकास्तत्समुद्भवाः ॥ ११ ॥

स्तम्भः स्वेदोऽथ रोमाञ्चलयौ वैस्वर्यवेपथू ।
अश्रुवैवर्ण्यमित्यष्टौ भावाः प्रोक्ता मनीषिभिः ॥ १२ ॥

भावे स्थायिन्यनैकान्त्याच्चरन्तो व्यभिचारिणः ।
उत्पद्यन्ते विलीयन्ते वारिधाविव वीचयः ॥ १३ ॥

निर्वेदग्लानिशङ्काश्रमधृतिजडताहर्षदैन्योग्रचिन्ता
त्रासेर्ष्यामर्षगर्वस्मृतिमरणमदाः सुप्तिनिद्रावबोधाः ।
व्रीडापस्मारमोहाः समतिरलसता वेगतर्कावहित्था
व्याध्युन्मादौ विषादोत्सुकचपलयुता त्रिंशदेते [1]त्रयश्च ॥ १४

नटेषु रसभावानामालोक्यत्वान्न[2] तत्वतः ।
रसः सामाजिकेष्वेव स्वस्वभावरसस्मृतेः ॥ १५ ॥

प्राणिनामपि सर्वेषां लोके स्वाभाविको रसः ।
अन्योन्यालम्बनत्वं स्यात्कान्ताकामुकयो रसे ॥ १६ ॥

उद्दीपनाः स्युः शृङ्गारे चन्द्रिकोपवनादयः ।
अनुभावाः प्रकीर्त्यन्ते कटाक्षक्षेपणादयः ॥ १७ ॥

स्तम्भादयः सात्विकाः स्युर्दर्शनस्पर्शनादिषु ।
निर्वेदाद्या यथायोग्यं योज्याः सञ्चारिणोऽपि च ॥ १८ ॥

सम्भोगो विप्रयोगश्च शृङ्गारो द्विविधो मतः ।
सम्भोगः सन्निकर्षः स्याद्भाषणाद्यैर्मिथो यथा ॥ १९ ॥

1. त्रयंच. 2. दतस्वतः. 3. पुलकिनी.

"व्रीडाकातरलोचनं विनमितं वक्त्रं विशद्वेपथू
हस्तौ हल्लकसोदरौ [3]पुलकितौ स्पृष्टौ तवेमौ स्तनौ ।
तन्वी तारकिता तनुस्तनुतरैः[1] स्वेदाम्भसां जालकैः
भावो भावजराज्यलक्ष्मिविदितो बाह्यैरलं डम्बरैः ॥"

विप्रलम्भो ऽभिलाषेर्ष्याप्रवासाद्यैरनेकधा ।
उदाहरणमेतेषामष्टावस्थासु वक्ष्यते ॥ २० ॥

रत्युल्लाससमुद्भूता विद्यन्तेऽत्र दशा दश ।
चक्षुःप्रीतिर्मनस्सक्तिः[2] सङ्कल्पो जागरस्तथा ॥ २१ ॥

तनुता [3]विषयद्वेषः त्रपानाशस्ततः परम् ।
मोहो मूर्छा मृतिरिति विज्ञेयाः प्रथमा यथा ॥ २२ ॥

आदरादीक्षणं यच्च चक्षुःप्रीतिः प्रशस्यते ।

"सामिप्रफुल्लसरसीरुहकोणनिर्य-
न्मत्तद्विरेफमहिलागतिगर्वचोरैः ।
लज्जालसैर्ललितभावशतैः कटाक्षैः
सा त्वामवैक्षत सखी मम मन्वभूप ॥"

चित्तासक्तिर्मुहुश्चिन्ता प्रतिकृत्यादिभिर्यथा ॥ २३ ॥

"त्वां [4]मन्मभूप लिखितुं त्रपयासमर्था
सा सन्निधौ मम चिरादलिखद्विचिन्त्य ।
[5]पद्मद्वयं करिकरौ गगनं कवाटं
साम्भोरुहं युगयुगं शशिनं ततश्च ॥"

मनोरथैः प्रियव्याप्तिः सङ्कल्पः कथितो यथा ।

"आमीलिताक्षमलकाकुलफालभाग-
मास्विन्नगण्डमधरस्फुरणाभिरामम् ।

1. तनुभरैः 2. मनश्शक्ति. 3. वस्तु विद्वेषः 4. मन्म. 5. पद्मा

पाणौ निधाय वदनं परभागशालि
[1]मन्मक्षितीश रतिमेति मनोरथैः सा ॥ ''
प्रियानवाप्त्या [2]तच्चिन्तासातत्याज्जागरो यथा ॥ २४ ॥

" राकाविधोरपि रवेरविशेषतोषा[3]
सा जागरादपि सखी मम [4]मन्मभूप ।
जानाति नान्तरमनन्यजबाणजालैः
दीना [5]निशादिवसयोर्दिननाथवंश ॥ "
तदलाभात्तनोः कामज्वरेण तनुता यथा ।
" भक्तेशनन्दन! भवद्विरहे मृगाक्षी
मन्मक्षितीश मदनज्वरकर्शिताङ्गी ।
[6]लब्धुं त्वदीयहृदये ललितेऽवकाशं
कार्श्यं निजं कलयते कमनीयमेव ॥ "
अर्थान्तरासहिष्णुत्वं विषयद्वेषणं यथा ॥ २५ ॥

" आलाप[7]मालिनिकरस्य निशम्य भीता
मुग्धा विलोक्य वदनं मुकुरं [8]जहाति ।
[9]मन्दं न[10] निश्वसिति मन्मथवेदनार्ता
कीरेन्दु[11]मारुत[12]भयात् [13]किमु मन्मभूप ॥ "
मानत्यागस्रपानाशो गौरवागणनाद्यथा ।
" मन्दा वहन्ति मलयाचलगन्धवाहाः
मत्ता नदन्ति मकरन्दरसेन भृङ्गाः ।

---

1. मन्व. 2. साचिन्त सान्तत्य जागरो. 3. पापात्. 4. मन्वभूप. 5. निशादि. 6. लब्धां. 7. मौलि. 8. जिहाति. 9. मन्दं च. 10. च. 11. मन्मथ 2. बलात्. 13. किमु.

मानं जहाति मदनाशुगपातभीता
मन्म क्षितीश भजते न मराल्यानम् ॥ "

उन्मादश्चित्तवैकल्यान्मोह इत्युच्यते यथा ॥ २६ ॥

" आलोलपल्लववतीमवलम्ब्य शाखा-
मागम्यतामिति शनैरनुनीय चूतम् ॥ "
नेत्राम्बु सा त्यजति नेतुमपारयन्ती
कोपेन मन्मनृपते कोमराङ्कभीम ॥ "

मुहुरिन्द्रियवैकल्यान्मूर्छा ज्ञानक्षयो यथा ।

" मुग्धा [1]मुहुः पिहितमन्मथबाणपीडां[2]
मूर्छां सखी मृगयते मम मन्मभूप ।
अज्ञातवेदनविशेषतया विवेकं
नाङ्गीकरोति नयने विनिमीलयन्ती[3] ॥ "

[4]क्षणान्तरे प्राणहानिः प्रियालाभान्मृतिर्यथा ॥ २७ ॥

" पुण्यं पुरातनमिहास्ति यदि त्वदीय
मङ्कं विशङ्कमाधिरोढुमरालकेश्याः ।
कामो नयेन्न दशमीमियताप्यवस्थां
कालेन मन्मनृपते करुणापरक्ताम् ॥ "

हास एव विभावाद्यैः पुष्टो हास्यत्वमागतः ।
विदूषकादिरालम्बो भावो हास्यरसो[5] यथा ॥ २८ ॥

" सम्मार्जनीसततसङ्गमनारपूतं
पाणिं पवित्रितकचे बहुतीर्थतोयैः ।

---

1. मुहुर्विहित. 2. दण्डां. 3. न्ति. 4. क्षणान्तर. 5. रसे.

[1]मन्मस्तकेऽर्पितवतीं मधुपानमत्ता
[2]धिक्तस्य मानमिह किन्नु विमाननाय ॥ ”

उद्दीपनविभावाः स्युस्तद्भावाकारविक्रियाः ।
भावकाक्षिविकासाद्याः अनुभावाः प्रकीर्त्तिताः ॥ २९ ॥

अश्रुवैवर्ण्यवैस्वर्यप्रमुखाः सात्त्विकाः स्मृताः ।
अत्र [3]हासाश्रुमत्यादिभावाः सञ्चारिणो मताः ॥ ३० ॥

उत्तमादिविभेदेन त्रिधा हास्यरसो मतः ।
स्मितं च हसितं चेतावनुभावाविहोत्तमे ॥ ३१ ॥

आद्यं विकासिगण्डं स्यादीषल्लक्ष्यरदं परम् ।
मध्यमं स्याद्विहसितं तथोपहसितं परम् ॥ ३२ ॥

मृदुस्वनं स्यात्प्रथमं शिरःकम्पं परं मतम् ।
अधमे [4]चापहसितं तथाऽतिहसितं मतम् ॥ ३३ ॥

शिरःकम्पाश्रुमत्पूर्वं विक्षिप्ताङ्गं द्वितीयकम् ।
शोक एव विभावाद्यैः पुष्टः करुणतां गतः ॥ ३४ ॥

इष्टनाशादनिष्टाप्तेः करुणोऽपि द्विधा [5]मतः ।
नष्टो वानिष्टयुक्तो वा बन्धुरालम्बनं यथा ॥ ३५ ॥

“ कस्तवाद्य कथमर्पयेत्सुधां
नाथ नष्टनयनोऽसि सांप्रतम् ।
हन्त वीतकरुणो हठात्कथं
यष्टि[6]मन्धविधुतां यमोऽहरत् ॥ ”

---

1. मञ्चित्तके. 2. विस्तस्यदान. 3. हर्षश्रमत्वादि. 4. चावहसितं. 5. रसः. 6. मन्द.

" नृपतितनयभृत्यैर्नीयमानो नृशंसैः
पथिजनवति[1] पश्चात्पाशबद्धस्वबाहुः ।
निशमयत विरागान्नीयतेऽसौ[2] निहन्तुं
कमलजकुलजातः कैरवः कातरात्मा ॥ "

उद्दीपनविभावाः स्युः स्वजनाक्रन्दनादयः ।
अनुभावास्तु निश्वासविलापरुदितादयः ॥ ३६ ॥

स्तम्भाश्रुपातवैस्वर्यप्रमुखाः सात्त्विकाः [3]स्फुटाः ।
अत्रापस्मारदीनत्वमरणालस्यसम्भ्रमाः ॥ ३७ ॥

विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः ।
क्रोध एव विभावाद्यैः पुष्टो रौद्रत्वमाप्तवान्[4] ॥ ३८ ॥

मात्सर्यादपि च द्वेषाद्रौद्रोऽपि द्विविधो यथा ।

" आजन्मब्रह्मचारी पृथुलभुजशिलास्तम्भविभ्राजमान-
ज्याघातश्रेणिरेखान्तरितवसुमती चक्रजैत्रप्रशस्तिः ।
वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्षुवानः पृषत्कान्
प्राप्तो राजन्यगोष्ठीवनगजमृगयाकौतुकी जामदग्न्यः ॥ "

" कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ "

आलम्बनविभावौ द्वौ मात्सर्यद्वेषगोचरौ ॥ ३९ ॥

उद्दीपनविभावाः स्युस्तद्भाषाचेष्टितादयः ।
अनुभावा भ्रुकुट्यक्षिरागोष्ठस्पन्दनादयः ॥ ४० ॥

---

1. जनपति. 2. सा. 3. मता. 4. क्रोधरसो भवेत्.

स्वेदवैवर्ण्यवैस्वर्यप्रमुखाः सात्त्विका मताः ।
ईर्ष्यामर्षोग्रतागर्वमदाद्या व्यभिचारिणः ॥ ४१ ॥

उत्साहस्तु विभावाद्यैः पुष्टो वीररसो भवेत् ।
दानवीरो दयावीरो युद्धवीरस्त्रिधा यथा ॥ ४२ ॥

" दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च [1]वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभू[2]त्तदद्भुतमिदं तत्रैव चास्तं गतम् ॥ "

" सिरामुखैस्स्पन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तथैव तावत्
[3]किं भक्षणात्त्वं विरतो गरुत्मन् ! ॥ "

" क्षुद्राः संत्रासमेते विजहतहरयः क्षुण्णशक्रेभकुम्भाः
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥ "

आद्ये सत्पात्रमालम्बो द्वितीये दीन उच्यते ।
वैरी तृतीये विज्ञेयः तत्र तूद्दीपनाः क्रमात् ॥ ४३ ॥

दानस्तुतिर्दीनवाक्यं[4] रणभेरीस्वनादयः ।
अनुभावाः क्रमादस्य प्रसादार्थास्त्रसङ्ग्रहाः ॥ ४४ ॥

[illegible] ज्ञेया यथायोग्यं सात्विकाः पुलकादयः ।
सञ्चारिणो गर्वहर्षामर्षधृत्यादयोऽपि च ॥ ४५ ॥

---

1. तदन्त. 2. कथाद्भुतमिदं. 3. किंच क्षणात्त्वं. 4. वीरवाक्यं.

भयमेव विभावाद्यैर्भयानकरसो यथा ।

" नीलेन ते नीररुहाक्षि गात्रं
नेलेन संछादय चञ्चलाभम् ।
इतीरयन्त्यद्रिगुहासु लीनाः
त्वद्वैरिणो वीक्ष्य तमोविघातम् ॥ "

आलम्बनविभावाः स्युः शत्रुव्याघ्रोरगादयः ॥ ४६ ॥

उद्दीपनविभावाः स्युरत्र तद्गर्जनादयः ।
अनुभावास्तु वैवर्ण्यकम्पस्वेदादयो यथा ॥ ४७ ॥

त एव सात्त्विका भावास्तत्राष्टौ स्पष्टलक्षणाः ।
सञ्चारिणो मोहदैन्यत्राससम्भ्रमणादयः ॥ ४८ ॥

जुगुप्सैव विभावाद्यैर्याता बीभत्सतां द्विधा ।
जुगुप्स्यदर्शनादेको वैराग्यादपरो यथा ॥ ४९ ॥

" वज्रक्षोणिभुजा पराक्रमयुजा निर्वासिता वैरिणः
[1]सन्दिष्टाः प्रतिचत्वरं प्रतिमठं ये नूत्नकापालिकाः ।
पूयार्द्रव्रणसंस्पृशो व्यपनयन्तः सत्वरं मक्षिका
भिक्षाभक्तविकीर्णशाकशकलान्येकत्र सञ्चिन्वते ॥ "

" चारशठचोरचेटकविटनटनिष्ठीवनशरावम् ।
कश्चुम्बति कुलपुत्रो वेश्याधरपल्लवं [2]मधुरमपि ॥ "

आलम्बनविभावाः स्युरहृद्या ये जुगुप्सिताः ।
उद्दीपनविभावा ये पूतिगन्धादयो मताः ॥ ५० ॥

अत्रानुभावा [3]नासास्यकूणनावेगपूर्वकाः ।
उन्मादस्तत्र यथायोग्यं सात्त्विकाः पुलकादयः ॥ ५१ ॥

1. संदिष्टाः. 2. मनोज्ञमपि; मधुरमपि. 3. नासास्य.

सञ्चारिणो यथायोग्यं निर्वेदोद्वेजनादयः ।
विस्मयस्तु विभावाद्यैः पुष्टोऽभूदद्भुतो यथा ॥ ५२ ॥

" सूतः सायकसम्भवः समुदिताः सूताननेभ्यो हयाः
नेत्रे द्वे रथिनो रथाङ्गयुगळं युग्यान्तमृभ्यो रथी ।
मौर्वी मूर्ध्नि रथस्थितो रथवहश्चापः शरव्यं ततं
योद्धुः कोशचरं तदेतदखिलं त्राणं रणं पातु नः ॥ "

अलौकिकचमत्कारि वस्त्वालम्बनमिष्यते ।
उद्दीपनविभावाः स्युः अहोवादादिवर्णनाः ॥ ५३ ॥

अनुभावा नेत्रवक्त्र[1]गण्डविस्फुरणादयः ।
सात्त्विकाः स्वेदरोमाञ्चप्रमुखाः समुदीरिताः ॥ ५४ ॥

हर्षवेगादयो भावाश्चात्र सञ्चारिणो मताः ।
शम एव विभावाद्यैः पुष्टः शान्तरसो यथा ॥ ५५ ॥

" आशायाः[2] प्रशमय्य वेगमखिलं निर्णीय विश्वं जडं
नीत्वा शान्तिपदे शनैस्तत इतो डोलायमानं मनः ।
कृत्वा चेतसि केवलं पशुपते रैश्वर्यमव्याहतं
कोणे कुत्रचिदास्महे वयममी कोलाहलैः किं फलम् ॥ "

अत्रालम्बनभावः स्याच्छम्भोस्तच्छाश्वतं पदम् ।
उद्दीपनास्तु वेदान्त[3]वेदिसम्भाषणादयः ॥ ५६ ॥

अनुभावास्तु कथ्यन्ते समतादर्शनादयः ।
सात्विकाः स्तम्भरोमाञ्चप्रमुखाः परिकीर्तिताः ॥ ५७ ॥

सञ्चारिणोऽपि निर्वेदमतिधृत्यादयो मताः ।
शृङ्गार उत्तमः स्याद्विष्णुरस्याधिदेवता[4] ॥ ५८ ॥

---

1. गण्डविस्फारणा. 2. [redacted] 3. वेद. 4. अधिदैवतम्.

हास्यः सुधाशुभ्रवर्णो हेरम्बोऽस्याधिदेवता ।
कषायवर्णः करुणो यमस्तस्याधिदेवता ॥ ५९ ॥

रौद्रो जपारक्तवर्णो रुद्रस्तस्याधिदेवता ।
धूम्रो भयानकस्तस्य महाकालोऽधिदेवता ॥ ६० ॥

बीभत्सो नीलमेघाभो नन्दी तस्याधिदेवता ।
अद्भुतः कनकच्छायो ब्रह्मा तस्याधिदेवता ॥ ६१ ॥

शान्तः स्फटिकवर्णः स्यात्परब्रह्माधिदेवता ।
हास्यः शृङ्गारसंभूतः करुणो रौद्रसंभवः ॥ ६२ ॥

वीराद्भुत उत्पन्नो बीभत्सोत्थो भयानकः ।
शृङ्गारबीभत्सरसौ तथा वीरभयानकौ ॥ ६३ ॥

रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ।
शान्तः सर्वरसोत्कृष्टो न मैत्री न विरोधिता ॥ ६४ ॥

रसभावोचितवर्णैः कर्णामृतवाक्यकल्पितैः श्लोकैः ।
[1]श्लोकैरपि लाल्यगुणो मानी[2] निर्वेत्तु गण्डमन्मनृप ॥ ६५ ॥

इत्यमृतानन्दयोगीन्द्रविरचितेऽलङ्कारसङ्ग्रहे रसनिर्णयो नाम
तृतीयः परिच्छेदः ॥

---

1. लोकैः. 2. मानिन्निर्वेतु.

## चतुर्थः परिच्छेदः

विनयो दक्षता त्यागो माधुर्यं प्रियवादिता ।
जनानुरागो वाग्मित्वं शौचं बुद्धिः कुलीनता ॥ १ ॥

धैर्यं स्मृतिस्तथोत्साहो यौवनं मान एव च ।
शौर्यं दृढत्वं तेजश्च धर्मशास्त्रार्थकारिता ॥ २ ॥

प्रज्ञा कलावेदिता च नेतृसाधारणा गुणाः ।
एवंविधगुणोपेतो नायकः स चतुर्विधः ॥ ३ ॥

धीरोदात्तोऽथ ललितो धीरशान्तोद्धता[1]विति ।
क्षमावानतिगम्भीरो महासत्त्वोऽविकत्थनः ॥ ४ ॥

कृपालुरनहंकारो धीरोदात्तो मतो यथा ।
"दधतो मङ्गलक्षौमे [2]दधानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥"
सचिवायत्तसिद्धिः स्यान्निश्चिन्तो भोगतत्परः ॥ ५ ॥

सुखी मृदुः कलासक्तः स्याद्धीरललितो यथा ।
"गौरवाद्यदपि जातु मन्त्रिणां दर्शनं प्रकृतिकांक्षितं ददौ ।
तद्गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम् ॥"
शुचिर्विवेकी सुभगः सुप्रसन्नः सुखी मृदुः ॥ ६ ॥

[3]द्विजातिको धीरशान्तो विलासी रसिको यथा ।
"भूयोभूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।

---

1. वपि. 2. वसानस्य. 3. द्विजोधीरो.

साक्षात्कामं नवमिव रतिर्मालती माधवं तं
गाढोत्कण्ठा ललितललितैरङ्गकैस्ताम्यतीति ॥ ”

मायामात्सर्यवान् दृप्तश्चण्डश्चपलमानसः ॥ ७ ॥

विकत्थनो वञ्चकोऽहङ्कारी धीरोद्धतो यथा ।

“ रुद्राद्रेस्तुलनं स्वकण्ठविपिनच्छेदो हरेर्वासनं
कारावेश्मनि पुष्पकस्य हरणं यस्येदृशाः केलयः ।
[1]सोऽयं दुर्दमबाहुदण्डसचिवो लङ्केश्वरस्तस्य मे
का श्लाघा गुणजर्जरेण [2]धनुषा कृष्टेन भग्नेन वा ॥ ”

नायकत्वमवस्थाभिरेषां सर्वरसेष्वपि ॥ ८ ॥

प्रत्येकमेषां शृङ्गारे[3]ऽवस्थाभिश्चतुरात्मता ।
दक्षिणश्च शठो धृष्टोऽनुकूलश्चेति कीर्तिताः ॥ ९ ॥

एकस्यां सक्तचित्तोऽपि कांन्तास्वन्यासु यः समम् ।
वर्तते गूढरागः सन् प्रोक्तोऽसौ दक्षिणो [redacted] ॥ १० ॥

“ स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुः
[4]द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च ।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः [5]स्थितं नाडिकाः ॥ ”

गूढविप्रियकारी तु शठ इत्युच्यते [redacted] ।
“ शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।

1. सोऽहं. 2. [redacted] 3. शृङ्गारावस्थासु. 4. द्यूते; द्यूते. 5. स्थिता॰

[1]तदेतत्काचक्षे घृतमधुमयत्वाद्बहुवचो
[2]विषेणाघूर्णंती किमपि न सखी मे [3]गणयति ॥ ”

व्यक्तान्यासङ्गचिह्नः स्याद्धृष्टो वितथवाग्यथा ॥ ११ ॥

“ तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपायते ।
इत्युक्ते क्व तदित्युदीर्य स सा तत्संप्रमाष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥ ”

अनुकूलस्त्वेकरसो नान्यासङ्गमतिर्यथा ।

“ विभवेऽपि सखि त्वया विना सुखमेतावदजस्य गण्यताम् ।
अहृतस्य विलोभनान्तरैर्मम सर्वे विषयास्त्वदाश्रयाः ॥ ”

इत्युदात्तादिनेतृणां भेदाः षोडशकीर्तिताः ॥ १२ ॥

श्रेष्ठमध्याधमत्वेन तेषामेव निरूपता ।
एवं नेतृभिदास्त्वष्टाचत्वारिंशत्प्रकीर्तिताः ॥ १३ ॥

पीठमर्दो विटविदूषकौ नेतृसहायकाः ।
पीठमर्दः कार्यदक्षः किञ्चिदूनगुणस्ततः ॥ १४ ॥

नेतृचित्तानुकूल्यैकविद्यो विट इतीरितः ।
विदूषकः प्रसङ्गेषु नेतुर्हासकरो मतः ॥ १५ ॥

लुब्धो धीरोद्धतः स्तब्धः पापकृत्प्रतिनायकः ।
यौवने सत्वसंभूताः पुंसां शोभादयो गुणाः ॥ १६ ॥

शोभा विलासो माधुर्यं गाम्भीर्यं स्थैर्यतेजसी ।
ललितौदार्यमित्यष्टौ तेषां लक्ष्माऽभिधीयते ॥ १७ ॥

---

1. [illegible]. 2. विशेषेणापूर्ण. 3. गणयती.

नीचे घृणाधिके स्पर्धा शोभायां शौर्यदक्षते ।
गतिः सधैर्या दृष्टिश्च विलासे सस्मितं वचः ॥ १८ ॥

श्लक्ष्णो विचारो माधुर्यं संक्षोभेऽपि महत्यपि ।
गाम्भीर्यं यत्प्रभावेन विकारो नोपलभ्यते ॥ १९ ॥

व्यवसायादचलनं स्थैर्यं विघ्नशतादपि ।
अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि ॥ २० ॥

शृङ्गाराकारचेष्टात्वं वचनं ललितं मृदु ।
प्रियोक्त्या जीविताद्दानमौदार्यं सदुपग्रहः ॥ २१ ॥

स्वाऽन्या साधारणा चेति तद्गुणा नायिका त्रिधा ।
स्वीया शीलार्जवयुता लज्जायुक्ता सती यथा ॥ २२ ॥

" शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
पत्युर्विप्रकृतापि रोषणतया मास्मप्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ "

अन्यान्योढा कन्यका च नान्योढाऽङ्गिरसे क्वचित् ।
कन्याऽनूढास्वेच्छयाऽस्यां रागोऽप्याङ्गिरसे क्वचित् ॥ २३ ॥

" एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥ "

साधारणा स्याद्गणिका कलाप्रागल्भ्यधौर्त्ययुक्[1] ।
रक्तेव [2]रञ्जयत्याढ्यान्निस्स्वं [3]निर्वासयेद्यथा ॥ २४ ॥

[redacted] येन समायुक्ता तदा तद्रागदूषिता ।
वियुक्ता स्वरुचिं धत्ते वेश्या किं स्फाटिकी शिला ॥ २५ ॥

---

1. धैर्य. 2. रञ्जयेदाढ्यान्. 3. निर्वापयेत्.

साधारणमिदं तासां लक्षणं रूपकेषु[1] तु ।
[2]रक्तैव तु प्रहसने नैषा दिव्यनृपाश्रये ॥ २६ ॥

स्वीया च मुग्धा मध्या च [3]प्रगल्भेति त्रिधा मता ।
मुग्धा नववयःकामा रतौ वामाल्पकुद्यथा ॥ २७ ॥

" अङ्कुरत्कुचमङ्गमायतदृशः स्वान्तं विशन्मन्मथं
[4]रोहद्रोमलतं [5]विलग्नमलिकं व्यालीलनीलालकम् ।
अङ्गीकारपराङ्मुखं [6]रतमनायासापनोद्यत्क्रमः
कोपो यस्य विलासिनः सुकृतिनामेकः स एवाग्रणीः ॥ "

मध्योदितवयःकामा मोहान्तसुरता यथा ।

" धन्यासि या कथयसे[7] प्रियसङ्गमेऽपि[8]
विस्रब्धचाटुशतकानि रतान्तरेषु ।
नीवीं प्रति प्रणिहितश्च करः प्रियेण
[9]सख्य. शपामि न हि किञ्चिदपि स्मरामि ॥ "

अत्यारूढवयःकामा प्रगल्भा प्रियवक्षसि ॥ २८ ॥

विलीयमानेव[10] रतारम्भेऽप्यप्यवशा[11] यथा ।

" गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगळच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद् मातिमामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किंनु मृता नु किं मनसि मे लीना विलीना नु किम् ।

मध्या [12]स्यात्त्रिविधा धीरा [13]धीराधीरेतरेति च ॥ २९ ॥

धीरा सोत्प्रासवक्रोक्त्या सागसं खेदयेद्यथा ।

---

1. अपि; च. 2. रक्तेव स्वप्रहसने. 3. प्रगल्भा च. 4. रोहात्. 5. वलग्न. 6. रतमनायासाप्रनोद्यत्क्रमः. 7. कथयति. 8. अति. 9. सख्या. 10. मानव. 11. A. व्यप्यवशा; प्यस्व. 12. तु. 13. धीरतरेति च.

" स्विन्नमातपभरेण[1] ते मुखं वायुना विलुलिताः शिरोरुहाः ।
क्लान्तमङ्गमपि मार्गसम्भ्रमात्तावदास्व [2]सुखगात्र मा विश ॥ "

[3]साश्रुसोत्प्रासवक्रोक्त्या धीराधीरा भवेद्यथा ॥ ३० ॥

" बाले ! नाथ ! विमुञ्च मानिनि ! रुषं, रोषान्मया किं कृतं
[4]खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा ? कस्याग्रतो रुद्यते ?
नन्वेतन्मम, का तवास्मि ? दयिता नास्मीत्यतो रुद्यते ॥ "

साश्रुनिष्ठुरभाषाभिरधीरा [5]सागसं यथा ।

" यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि मादरं कृथाः ।
खण्डिताधरकलङ्कितं स्वलं शक्नुमो न नयनैर्निरीक्षितुम् ॥ "

प्रगल्भा [6]च त्रिधा धीरा धीराधीरेतरेति च ॥ ३१ ॥

सावहित्थादरोदास्ते सुरते विहितागसम् ।
प्रगल्भधीरा दयितं [7]खेदयेत्कुपिता यथा ॥ ३२ ॥

" एकत्रासनसङ्गतिः परिहृता प्रत्युद्गमाद्दूरतः
[8]ताम्बूलानयनच्छलेन रभसाऽऽश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्याऽन्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ "

" आयस्ता कलहं पुरेव कुरुते न स्रंसने वाससो
भुग्नभ्रूरतिखण्ड्यमानमधरं दत्ते[9] न केशग्रहे ।

1. भरेण. 2. सुभगात्र. A. सुखगात्र. 3. सभ्रूशोत्प्रास. A. साश्रु-सोत्प्रास. 4. रोषो; दोषो; A. खेदो. 5. सागसं. 6. अपि. 7. भेद-येत्. 8. तां बूलानयन. 9. A. धत्ते.

अङ्गान्यर्पयति[1] स्वयं भवति नो वामा [2]हठालिङ्गने
तन्व्या शिक्षित एष संप्रति वरः कोपप्रकारोऽपरः ॥ ”

प्रगल्भधीराधीरा तु वक्रसोत्प्रासवाग्यथा ।

“ कोपो यत्र भ्रुकुटिरचना विग्रहो यत्र मौनं[3]
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः[4] खलायाः ॥ ”

अपि प्रगल्भाऽधीरा संतर्ज्य ताडयेद्यथा ॥ ३३ ॥

“ कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा [5]वासनिकेतनं दयितया [6]सायं सखीनां पुरः ।
भूयो [6]नैवमिति स्खलन्मृदुगिरा[7] संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदन्त्या हसन् ॥ ”

ज्येष्ठाकनिष्ठाभेदेन पुनर्मध्या तु षड्विधा ।
प्रगल्भाऽपि पुनस्ताभ्यां भेदाभ्यां षड्विधा यथा ॥ ३४ ॥

“ दृष्ट्वैकासनसङ्गते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलात् ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलपुलकां[8] धूर्तोऽपरां चुम्बति ॥ ”

[9]आसामष्टाववस्थाः स्युः स्वाधीनपतिकादिकाः ।
स्वाधीनपतिका चाद्या तथा वासकसज्जिका ॥ ३५ ॥

---

1. अर्पयती. 2. हुतालिङ्गने. A. हठालिङ्गने. 3. मानं. 4. मोहः 5. स्वैरं. 6. प्येवमिति. 7. कलगिरा. 8. शिथिलां. A. फलकां. 9. या-मष्टास्ववस्थासु. A. यासामष्टास्ववस्थासु.

कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
विरहोत्कण्ठिता चैव खण्डिता चाभिसारिका ॥ ३६ ॥

आसन्नायत्तरमणा[1] स्वाधीनपतिका यथा ।

" मा गर्वमुद्वह कपोलतले चकास्ति
कान्ते स्वहस्तलिखिता मम मञ्जरीति ।
[2]अन्याऽपि किं न सखि भाजनमीदृशानां
वैरी न चेद्भवति[3] वेपथुरन्तरायः ॥ "

एष्यत्प्रिया मुदा वासकसज्जाऽलङ्कृता यथा ॥ ३७ ॥

" विमुक्तमालिन्यविशेषकान्ति-
रामुक्ततारामलचारुहारा ।
स्फीताम्बरा प्रीतिमुपैति काचि-
दुदेष्यतीन्दौ सति यामिनीव ॥ "

[4]विधूय दयितं चार्ता कलहान्तरिता यथा ।

" अनुकूलजनोऽनुनेतुकामः
[5]पुरुषः पादनतो गतो विधूतः ।
शिशिरे सलिलैः शिखामिरभे-
[6]र्निहितं किं न गुणं निजं जहाति ॥ "

विमानिता विप्रलब्धा नायाते समयं यथा ॥ ३८ ॥

" उत्तिष्ठ दूति ! यामो यामो यातस्तथाऽपि नायातः ।
मिथ्याप्रलापशीले विश्वासः कुत्र धूर्तेऽस्मिन् ॥ "

---

1. रमणी. 2. A. नन्वापि किं सन्ति सभाजनमीदृशानां. 3. A. भवतु. 4. विधूय दयितं वाम. 5. पुरुषैर्वादनतो गतो विधूर्तः. A. पुरुषः पादनतो गतो विधूतः. 6. निहतं

देशान्तरगते प्रोषितप्रिया दयिते[1] यथा ।

“ उत्सङ्गे सा[2] मलिनवसने[3] सौम्य विक्षिप्य वीणां
[4]मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।
तन्त्रीमार्द्रां नयनसलिलैः [5]साधयित्वा कथंचित्
भूयोभूयः स्वयमधिकृतां मूर्छनां विस्मरन्ती ॥ ”

चिरयत्यव्यळीके तु विरहोत्कण्ठिता यथा ॥ ३९ ॥

“ सखि स[6] विजितो वीणावाद्यैः कयाप्यपरस्त्रिया
पणितमभवत्ताभ्यां तत्र क्षपा ललिता ध्रुवम् ।
कथमितरथाऽशेषालीषु स्खलत्कुसुमास्वपि
प्रसरति नभोमध्येऽपीन्दौ प्रियेण विलम्ब्यते ॥ ”

[7]खण्डितेर्ष्यावती ज्ञातस्मरचिह्ने प्रिये यथा ।

“ नवनखपदमङ्गं[8] गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्प-
न्नवपरिमळगन्धः केन शक्योऽपनेतुम्[9] ॥ ”

[10]सरेद्वा सारयेद्वाऽभिसारिका [11]कामिनी यथा ॥ ४० ॥

“ प्रचलितनिजलज्जाः प्राङ्मुखं वीक्षमाणाः
तिमिरविगमभीतास्तूर्णमुत्तीर्णमार्गाः ।
वलयचलनलोला वञ्चितात्मीयलोकाः
सततमभिसरेयुः सागसोऽप्यात्मनाथान् ॥ ”

---

1. दयिता. 2. वा. 3. यशसे. 4. यद्गोत्राङ्कं. 5. सारयित्वा. 6. न. 7. [illegible]; खण्डितेर्ष्यारतिज्ञातस्मरचिह्ना प्रिया यथा. A. [illegible] ज्ञातस्मरचिह्नप्रिया यथा. 8. [illegible]. 9. वरीसुं. 10. सरेद्वाभिसरेद्वा. 11. कामुकी. A. नायिका.

आसां दूत्यः सखी दासी धात्रेयी प्रातिवेशिनी ।
लिङ्गिनी [1]शिल्पिनी कारुः स्वयं वा तदसंभवे ॥ ४१ ॥

यौवने सत्त्वजाः स्त्रीणामलङ्कारास्तु विंशतिः ।
भावो हावश्च हेला च त्रयोऽप्यङ्गसमुद्भवाः ॥ ४२ ॥

" [2]मातः कं हृदये निधाय सुचिरं रोमाञ्चिताङ्गी मुहुः
जृम्भामन्थरतारकां विलुलितापाङ्गां[3] दधाना दृशम्[4] ।
सुप्तेवालिखितेव शून्यहृदया रेखावशेषीभव-
त्यात्मद्रोहिणि किं [5]ह्रिया कथय मे गूढो निहन्ति स्मरः ॥ "

शोभा कान्तिस्तथा दीप्तिर्माधुर्यं च प्रगल्भता ।
औदार्यं धैर्यमित्येताः सप्तालङ्कृतयो मताः ॥ ४३ ॥

लीला विलासो विच्छित्तिर्विभ्रमः किलिकिञ्चितम् ।
मोट्टायितं कुट्टमितं बिब्बोको ललितं यथा ॥ ४४ ॥

विहृतं च विविच्यन्ते तत्र स्वाभाविका दश ।
[6]निर्विकारो मनोवृत्तिविशेषः सत्त्वमुच्यते ॥ ४५ ॥

[7]तत्राद्यविक्रियाभावो भाव्यलङ्कारकृद्यथा ।
" दृष्टिं सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रे प्रेषयति प्रवर्तितसखीसम्भोगवार्तास्वपि ।
पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग्यथा
बाला नूतनमन्मथव्यतिकरावष्टम्भमाना शनैः ॥ "

भावो मानसशृङ्गारो हावोऽक्षिभ्रूदिकृद्यथा[8] ॥ ४६ ॥

---

1. शिल्पिका. 2. मारं किं. 3. पारां. 4. मृश. 5. प्रिया. [6.] निर्विकारात्मनोवृत्तिविशेषः सत्त्वमुच्यते. 7. तस्याद्यावि क्रिया भाति [illegible] भाति भाव्यलंकारकृद्यथा । 8. A. भ्रूविकृतिकृद्यथा.

"अव्याजमुग्धमधुरैररविन्दकोण-
निर्यन्मधुव्रतनिकायनिभैः कटाक्षैः ।
भावावतारपिशुनैरपि भो वयस्य
बाला भवन्तमकरोदपदेशलक्ष्यम् ॥"

स एव हेला सुव्यक्तशृङ्गारद्योतिका[1] यथा ।

"मकरन्दपानमत्तां मधुकरमालामिव श्यामाम् ।
लालसललितापाङ्गां दृष्टिं प्रेषयति दूतिकामिव ते ॥"

रूपोपभोगतारुण्यैः शोभाङ्गालङ्कृतिर्यथा ॥ ४७ ॥

"तां प्राङ्मुखीं तत्र निवेश्य तन्वीं
क्षणं व्यलम्बयन्त पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः
[2]प्रसाधने सन्निहितेऽपि नार्यः ॥"

शोभैव रागनिबिडा[3] कान्तिरित्युच्यते यथा ।

"उन्मीलद्वदनेन्दुदीप्तिविसरैर्दूरे समुत्सारितं
भग्नं पीनकुचस्थलस्य च रुचा हस्तं प्रभागर्हितम् ।
एतस्याः कलविङ्ककण्ठकदलीकल्पं मिलत्कौतुका-
दप्राप्ताभिमुखं [4]रुषेव सहसा केशेषु लग्नं तमः ॥"

[5]कान्तेरेव हि विस्तारो दीप्तिरित्युच्यते यथा ॥ ४८ ॥

"वनतरुवरवाटीवर्ति[6] गाढं पुरस्ता-
त्ततनिजतनुकान्त्या [7]तर्जयन्ती तमिस्रम् ।

1. द्योतको. A. द्योतका. 2. प्रसाधने. 3. निबिडा; 4. रुषेव 5. कान्तिरेव. 6. वर्ति. 7. तर्जयन्ती.

दिनविगमजिगीषोर्दीपिकेवासमेषो-
श्चरति चकितपादन्याससम्भावितोर्वी ॥ ”

[1]अश्लाघ्यवस्तुयोगेऽपि माधुर्यं रम्यता यथा ।

“ सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ ”

व्रीडोत्थसाध्वसत्यागः प्रागल्भ्यं [2]गीयते यथा ॥ ४९ ॥

“ तथा व्रीडाविधेयापि[3] तथा मुग्धापि सुन्दरी ।
कलाप्रयोगचातुर्ये सभास्वाचार्यकं गता ॥ ”

औदार्यं [4]प्रश्रयोत्कर्षो बह्वायासेपि तद्यथा ।

“ अलसारुणलोचनारविन्दां
परिभोगोचितधूसरैकचेलाम् ।
शिथिलाकुलवेणिबन्धरम्या-
मबलामन्तिकशायिनीं दिदृक्षे ॥ ”

अचापल्यहतं चित्तवृत्तं स्थैर्यं मतं यथा ॥ ५० ॥

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यति ।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं नन्वेवायं जनो न च जीवितुम् ॥ ”

प्रियानुकरणं लीला मधुरैश्चेष्टितैर्यथा ।

---

1. माश्लाघ्य. 2 गीयंते. A. नीयते. 3. विधेयापि. 4. A. विनयोत्कर्षो.

“ आसितानि हसितानि कृतानि
प्रेक्षितानि गदितानि गतानि ।
प्रायशोऽनुकुरुते ललिताङ्गी
नर्तकीव चतुरं दयितस्य ॥ ”

प्रिये दृष्टे विलासोऽङ्गक्रियाद्यतिशयो यथा ॥ ५१ ॥

“ अत्रान्तरे किमपि वाग्विभवातिवृत्ति-
वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः ।
तद्भूरिसात्त्विकविकारमपास्तधैर्य-
माचार्यकं किमपि मान्मथमाविरासीत् ॥ ”

स्वल्पाप्यलंक्रिया कार्याद्विच्छित्तिस्तोषकृद्यथा ।

“ कर्णार्पितो लोध्रकषायरूक्षे
गोरोचना[2]भङ्गनितान्तगौरे ।
तस्याः कपोले परभागलाभा-
द्बबन्ध चक्षूंषि [3]यवप्ररोहः ॥ ”

विभ्रमस्त्वरया काले भूषणव्यत्ययो यथा ॥ ५२ ॥

“ श्रुत्वा[4] यान्तं बहिः कान्तमसमाप्तविभूषया ।
फालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकं कृतम् ॥ ”

किलिकिञ्चितमश्रुकृद्धर्षादेः सङ्करो यथा ।

“ रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्धमधुरे ।

1. वृत्ति. 2. लेप. 3. युवप्ररोह: 4. कृत्वायातं.

कृतभ्रूभङ्गा सा प्रकटितविलक्षणार्थरुदित[1]-
क्रुधोद्भ्रान्तं कान्तं पुनरपि विदध्यान्मयि मुखम् ॥ ''

चित्रादावपि तत्त्वेन बुद्धिर्मोट्टायितं यथा ॥ ५३ ॥

'' चित्तवर्तिन्यपि नृपे चित्रावेशेन चेतसि ।
[2]व्रीडार्धवलितं चक्रे मुखेन्दुमवशैव[3] सा ॥ ''

मोट्टायितं प्रियं रटत्वा स्वाङ्गभङ्गादि वा यथा ।

'' स्मरदवथुनिमित्तं गूढमुन्नेतुमस्याः
सुभग तव कथायां प्रस्तुतायां सखीभिः ।
[4]भवति विततपृष्ठोदस्तपीनस्तनाग्रा
ततवलयितबाहुर्जृम्भितैः स्वाङ्गभङ्गैः ॥ ''

हृष्टान्तःपरिरम्भादौ कुप्येत्कुट्टमितं यथा ॥ ५४ ॥

'' परिरम्भपरं निजं निरुन्धे
करयोः केवलमेव कर्म कान्तम् ।
पुलकैः पुनरुच्यते भवत्याः
पुर एव स्फुटमायताक्षि भावः ॥ ''

गर्वाभिमानवेशेन बिब्बोकोऽनादरो यथा ।

'' [5]सव्याजं तिलकालकान्विरलयल्लोलाङ्गुलिः[6] संस्पृशन्
वारंवारमुदञ्चयन्कुचयुगप्रोदञ्चि[7] नीलाञ्चलम् ।
यद्भ्रूभङ्गतरङ्गिताञ्चितदृशा सावज्ञमालोकितं[8]
तद्गर्वादवधीरितोऽस्मि न पुनः [9]कान्ते कृतार्थीकृतः ॥ ''

---

1. रुदिता कृतोद्भ्रान्तं. 2. व्रीडादवनतं. 3. मवकेव. 4. हरति, विनत. 5. तिलकालिका न विरलं. 6. ली. 7. प्रोत च चीनाञ्चलम्. 8. तः 9. कान्तः

सुकुमारोऽङ्गविन्यासो मसृणो ललितं यथा ॥ ५५ ॥

" सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती[1]
सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन[2] ।
विन्यस्यन्ती चरणकमले लीलया स्वैरपातै-
र्निस्सङ्गीतं प्रथमवयसा नर्तिता[3] पङ्कजाक्षी ॥ "

वक्तव्यमपि यन्नोक्तं व्रीडया विहृतं यथा ।

" पादाङ्गुष्ठेन भूमिं किसलयमृदुना सापदेशं लिखन्ती
भूयोभूयः क्षिपन्ती मयि शितशबले लोचने लोलतारे ।
वक्त्रं [4]ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना
[5]यन्मां नोवाच किञ्चित्स्थितमपि हृदये मानसं तद्दुनोति[6] ॥ "

इत्युदाहृतयो नेतृगुणेषूह्या यथोचितम् ॥ ५६ ॥

नेतारो बहवः सन्ति धीरोदात्तो जगत्त्रये ।
मृग्यनीयो विशेषेण चैको मन्त्रमहीपते ॥ ५७ ॥

**इत्यमृतानन्दयोगीन्द्रविरचितेऽलङ्कारसङ्ग्रहे नेतृभेदविचारो[7] नाम चतुर्थः परिच्छेदः ॥**

---

1. आपतन्ती. 2. लोचनस्यान्तिके तं. 3. गर्भिता. 4. दीनं ममेषत्. 5. यस्मान्नेवाच. 6. तद् धुनोति. 7. विनिर्णयो.

## पञ्चमः परिच्छेदः

रीतिरात्मात्र काव्यस्य कथ्यते सा चतुर्विधा ।
वैदर्भी च तथा गौडी पाञ्चाली लाटिकेति च ॥ १ ॥

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥ २ ॥

अल्पप्राणाक्षरैः श्लेषः पदैरशिथिलैर्मतः ।
पदैः प्रसन्नो यत्रार्थः प्रसादोऽसौ प्रतीयते ॥ ३ ॥

प्रक्रान्तबन्धो यत्र स्यात्समः स्यात्समता मता ।
बन्धा मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः ॥ ४ ॥

[1]सरसौ यत्र शब्दार्थौ माधुर्यं श्रुतिमोदकृत् ।
[2]अनिष्ठुरैः श्रुतिसुखैर्वर्णैः स्यात्सुकुमारता ॥ ५ ॥

अर्थव्यक्तिरनेयोऽर्थः[3] साक्षाद्यत्राभिधीयते ।
शब्दार्थयोर्गुणोत्कर्षो यत्र सा स्यादुदारता ॥ ६ ॥

वाक्ये समासबाहुल्यं हृद्यमोजोऽभिधीयते ।
कमनीयो लौकिकोऽपि यत्रार्थः कान्तिरुच्यते ॥ ७ ॥

समाधिरन्यधर्माणामध्यासादर्थगौरवम् ।
एतैः समग्रा वैदर्भी वर्ण्यते दशभिर्गुणैः ॥ ८ ॥

[4]असमस्ता द्वित्रपदसमस्ता वा मनोहरा ।
वर्गद्वितीयप्रचुरा[5] स्वल्पघोषाक्षरा यथा ॥ ९ ॥

---

1. सरसौ यत्र शब्दार्थौ. 2. A. अक्लिष्टकैः. 3. A. अनेयार्थ.
4. A. असमस्तवाद्द्वित्रिपद 5. A. प्रचुर स्वल्पः

" वैदेहि ! पश्यामलयाद्विभक्तां
मत्सेतुना फेनिलमम्बुराशिम् ।
छायापथेनेव शरत्प्रसन्न-
माकाशमाविष्कृतचारुतारम् ॥ "

समस्तात्युद्भटपदामोजःकान्तिसमन्विताम् ।
महाप्राणाक्षरवतीं गौडीमाहुर्बुधा यथा ॥ १० ॥

" अश्रान्तश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवा-
जिह्मब्रह्ममुखौघविघ्नितनवस्वर्गक्रियाकेलिना ।
पूर्वं गाधिसुतेन सामिघटिता मुक्तानु मन्दाकिनी
यत्प्रासाददुकूलवल्लिरनिलान्दोलैरखेलद्दिवि ॥ "

माधुर्यसौकुमार्यौजःकान्तिभिः सहिता गुणैः ।
समस्तपञ्चषपदा पाञ्चाली कीर्त्यते यथा ॥ ११ ॥

" वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भै-
र्ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधुतावाङ्मुखत्वैः ।
कस्या नोत्तानगाया दिविसुरसुरभेरास्यदेशं गताग्रै-
र्यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म ॥ "

समस्तरीतिसम्मिश्रा लाटी मृदुसमासिनी ।
न युक्तवर्णभूयिष्ठा [1]स्वल्पघोषाक्षरा यथा ॥ १२ ॥

" एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुर
प्रान्तं हन्त ! पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत्पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥ "

1. स्पष्ट.

शृङ्गारहास्यकरुणाशान्ता[1] माधुर्यशालिनः ।
वीररौद्राद्भुतभयबीभत्सेष्वोज उच्यते ॥ १३ ॥

रसेष्वेतेषु सर्वेषु प्रमादाः परिकीर्तिताः ।
अन्ये गुणा यथा योग्यं योजनीयाः क्वचित्क्वचित्[2] ॥ १४ ॥

अथार्थानामलङ्काराः कथ्यन्ते साम्प्रतं क्रमात् ।
स्वभावाख्यानमुपमा रूपकं दीपकावृती ॥ १५ ॥

आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना ।
समासातिशयोत्प्रेक्षा हेतुः सूक्ष्मो लवः क्रमः ॥ १६ ॥

प्रेयोरसवदूर्जस्वि पर्यायोक्तं समाहितम् ।
उदात्तापह्नुतिश्लेषविशेषास्तुल्ययोगिता ॥ १७ ॥

विरोधाप्रस्तुतस्तोत्रे व्याजस्तुतिनिदर्शने ।
सहोक्तिः परिवृत्त्याशीर्वक्रोक्तिरथ सङ्करः ॥ १८ ॥

यद्यद्वस्तु यथावस्थं तथा तद्रूपवर्णनम् ।
स्वभावोक्तिरिति ख्याता सैव जातिर्मता यथा ॥ १९ ॥

"अङ्कोपान्तमुपाश्रितो गजमुखो मातुर्भुजालिङ्गितः
स्तन्यास्वादसुखातिरेकतरलस्तद्वक्त्रदत्तेक्षणः ।
हस्ताग्रेण पयोधरान्तरमुखं मृन्दन्मुहुर्लीलया
पादाब्जं मणिकिङ्किणीपरिगतं प्रेङ्खोलयन् पातु वः ॥"

जातिक्रियागुणद्रव्यभेदैः सापि चतुर्विधा ।
यस्य येनास्ति सादृश्यं यस्मात्कस्मात्प्रकारतः ॥ २० ॥

1. करुणाश्शान्तो. 2. पृथक्पृथक्.

उपमा नाम तस्योक्तिरिववद्वादिभिर्यथा ।

" उन्मुक्तकञ्चुकतयेयमुदारकान्तिः
शस्त्रीव शम्बररिपोरपनीतकोशा ।
रक्तावगुण्टनपटोरचितापिधाना
सन्ध्याम्बुवाहकलितेव शशाङ्करेखा ॥ "

बहवस्तत्प्रकाराः[1] स्युस्तेषामन्यत्र विस्तरः ॥ २१ ॥

एकत्वं रूपणं यत्स्यादुपमानोपमेययोः ।
रूपकं नाम तच्चापि बहुभेदयुतं यथा ॥ २२ ॥

" मन्दस्मितं मधुरमञ्जुमुखं सरोजं
मन्दारदाममहितं ननु बाहुयुग्मम् ।
पुण्याहपूर्णकलशौ पृथुलौ स्तनौ ते
पुण्यायितानि हि कटाक्षनिरीक्षणानि ॥ "

सुबन्तं वा तिङन्तं वा पदमेकत्र सङ्गतम् ।
सर्वोपकारकं स्याच्चेत्तदाहुर्दीपकं यथा ॥ २३ ॥

" अक्षं विक्षिपति ध्वजं विभजते मृद्नाति नद्धं गुणं
चक्रे चूर्णयति क्षिणोति तुरगान् रक्षःपतेः पक्षिराट् ।
रुन्धे गर्जति तर्जयत्यभिभवत्यालम्बते ताडय-
त्याकर्षत्यपकर्षति प्रचलयत्यञ्चत्युदञ्चत्यपि ॥ "

" सञ्चारपूतानि दिगन्तराणि
कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा
प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ "

1. तत्प्रकाशाः.

उक्तस्यानेकदोक्तिः[1] स्यादावृत्तिः सा मता यथा ।

" विश्वं जित्वा भवानद्य विहरत्यवरोधनैः ।
विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥ "

आक्षेपः प्रतिषेधोक्तिः [2]कालधर्मादिनात्मना ॥ २४ ॥

आक्षेप्याणामनन्तत्वादाक्षेपोऽपि तथा यथा ।

" कस्तूरीतिलकं फाले बाले मा कुरु मा कुरु ।
अद्य साम्यं भजामीति जृम्भते शशलाञ्छनः ॥ "

प्रस्तुतार्थस्य सिद्ध्यर्थं विन्यासोऽर्थान्तरस्य यः ॥ २५ ॥

असावर्थान्तरन्यासो भिद्यते बहुधा यथा ।

" आतपे धृतिमता सह वध्वा
यामिनीविरहिणा विहगेन ।
सेहिरे न किरणा हिमरश्मेः
दुःखिते मनसि सर्वमसह्यम् ॥ "

शब्दे[3]प्रातीतिके वापि [4]सादृश्यं यत्र वस्तुनोः ॥ २६ ॥

[5]तयोर्यद्भेदकथनं व्यतिरेको मतो यथा ।

" अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि ।
असावञ्जनसङ्काशस्त्वं तु चामीकरद्युतिः ॥ "

" हीना दानगुणेन हेमवलयैस्त्यक्ता गता विभ्रमैः
भूयस्त्वत्परिभूतिसंशयवती मध्येजलं संश्रिता ।
किंचैतत्कुचकुम्भयुग्मविलसत्क्षौमापिधानोज्झिता[7]
बाले बालमृणालिका कथमियं त्वद्बाहुवल्लीसमा ॥ "

---

1. अनेकधोक्ति. 2. कालधर्मादिकात्मनाम्. 3. प्रतीतिके. 4. सादृश्ये सति. 5. तयोर्यदेकथनं. 6. भीतात्वत्परिभूति. A. भीतास्तत्परि. 7. A. नोन्नता

स्वकारणं निराकृत्य कारणान्तरकल्पकम् ॥ २७ ॥

विभावना स्वभावो वा [1]विभाव्यो यत्र सा यथा ।

" असम्भृतं मण्डनमङ्गयष्टे
रनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात्परं साऽथ वयः प्रपेदे ॥ "

" [2]अनञ्जितासिता दृष्टिर्भ्रूरनावर्जिता नता[3]
अरञ्जितोऽरुणश्चायमधरस्तव सुन्दरि ! ॥ "

वस्तुकिञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः ॥ २८ ॥

उक्तिः [4]संक्षेपरूपत्वात्सा समासोक्तिरिष्यते ।
[5]अन्यापदेश इत्यासीन्नामान्यच्चोच्यते यथा ॥ २९ ॥

" मुग्धे ! यथा कलयसे मृगतृष्णिकाम्भः
[6]तद्विद्धि तामरसनेत्रि ! तटाकवारि ।
अस्मिन्यथेष्टमवगाह्य सुखं विहृत्य
चिन्तां[7] परां कुरु चिराय विमुञ्च तापम् ॥ "

[8]विवक्षितार्थविषये लोकवृत्तातिशायिनी ।
उक्तिस्त्वतिशयोक्तिः स्यादनुद्वेगकरी यथा ॥ ३० ॥

" यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापगा ।
मुमुचे न पतिव्रतौचिती प्रतिचन्द्रोदयमभ्रगङ्गया ॥ "

---

1. A. विभावो. 2. अरञ्जिता. 3. A. यथा. 4. रूपास्यात्. 5. A. अन्यापदेशइत्यस्य नामान्यत्रोच्यते यथा. 6. A. तद्वोर. 7. चिन्तामपाकुरु. 8. A. विलक्षितार्थ.

यथार्थस्यान्यथावल्द्सिरुत्प्रेक्षा साभिधीयते ।
मन्ये शङ्के ध्रुवं प्रायो नूनमित्यादिभिर्यथा ॥ ३१ ॥

" यदेतस्मिन्निन्दौ जलदलवलीलां प्रकुरुते
[1]तदाचष्टे लोकः शश इति न मां तु प्रति तथा ।
अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी[2]
कटाक्षोल्कापातव्रणकिणकलङ्काङ्कितनुम् ॥ "

इवशब्दः क्रियायोगे तूत्प्रेक्षान्यञ्जको यथा ।

" अयोध्यापुरनारीणां मुखसौन्दर्यलिप्सया ।
सरोजानि सरोमध्ये चरन्तीव चिरं तपः ॥ "

कारकं वा ज्ञापकं वा हेतुर्यत्र विशेषणम् ॥ ३२ ॥

निर्वर्त्ये [3]वा विकार्ये वा प्राप्ये वा करकं यथा ।

" अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः ।
उत्पादयति लोकस्य प्रीतिं दक्षिणमारुतः ॥ "

" एष ते विद्रुमच्छायो [4]मरुमार्ग इवाधरः ।
करोति कस्य नो[5] मुग्धे पिपासाव्याकुलं मनः ॥ "

" मानयोग्यां करोमीति प्रियस्थाने [6]स्थितां सखीम् ।
बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरम् ॥ "

" अवध्यैरिन्दुपादानामसाध्यैश्चन्दनाम्भसाम् ।
देहोष्मभिः [7]स्सुबोधं ते सखि ! कामातुरं मनः ॥ "

भावाभावादिभेदेन हेतुभेदास्त्वनेकशः[8] ॥ ३३ ॥

---

1. तदाचक्षे. 2. A. रमणी. 3. अधिकार्येवा. 4. दारुमार्ग. 5. A. वा. 6. A. कृतां. 7. A. सुबोध्यं ते. 8. भेदस्त्वनेकशः.

इङ्गिताकारलक्ष्योऽर्थः सौक्ष्म्यात् [1]सूक्ष्म इति स्मृतः ।

" पथि पथिकवधूभिस्सादरं पृच्छ्यमाना
कुवलयदलनीलः कोऽयमार्ये ![2] तवेति ।
स्मितविकसितगण्डं व्रीडविभ्रान्तनेत्रं
मुखमवनमयन्ती स्पष्टमाचष्ट सीता ॥ "

वचसा चेष्टयाऽर्थस्य गोपनं वा प्रकाशनम् ॥ ३४ ॥

[3]लेशमेके विदुर्निन्दां स्तुतिं[4] वा लेशतो यथा ।

" निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥ "

" दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ "

उद्दिष्टानां पदार्थानां क्रमेणैवानुदेशिभिः ॥ ३५ ॥

सह संयोगकथनं क्रम इत्युच्यते यथा[5] ।

" हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु
स्तनतपन[6]वनाम्भोहर्म्यगोक्षीरपानैः ।
सुखमनुभव राजंस्त्वद्द्विषो यान्तु नाशं
दिवसकमललज्जा[7]शर्वरीरेणुपङ्कैः[8] ॥ "

1. सूक्ष्मो मतो यथा. 2. आर्यो. 3. A. देश. 4. A. स्तुतेर्वा. 5. बुधैः
6. A. हिमाम्भो. 7. लज्जे. 8. A. पङ्काः.

प्रेयः [1]प्रियतरालापैः प्रेमादिख्यापनं यथा ॥ ३६ ॥

" अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः !
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥ "

रसानामेव सर्वेषामुत्कर्षो रसवद्यथा ।

" मलयपवनमन्दस्पन्दमानारविन्द
[2]प्रसरदलिविलासि[3] प्रौढिपाटच्चराणाम् ।
[4]अधिगतिरहमेवालीकरोषस्पृशां[5] स्या-
मलसवलदपाङ्गालोकितानाममुष्याः ॥ "

रसानामिह चान्येषामुत्कर्षस्तूह्यतां बुधैः ॥ ३६ ॥

" [6]अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यू[7]रुजधनस्पर्शी नीवीविस्रंसनः करः ॥ "

अत्यहङ्कारवद्वाक्यमूर्जस्वीत्युच्यते यथा ।

" क्षुद्राः सन्त्रासमेनं विजहत हरयो भिन्नशक्रेभकुम्भाः
युष्मद्गात्रेषु लज्जां दधति परममी सायकास्संपतन्तः ।
सौमित्रे ! तिष्ठ पात्रं त्वमपि न हि रुषो नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥ "

इष्टमर्थमनाख्याय साक्षात्तस्यैव सिद्धये ॥ ३८ ॥

यत्प्रकारान्तराख्यानं पर्यायोक्तं मतं यथा ।

" त्वं मुग्धाक्षि ! विनैव कञ्चुलिकया धत्से मनोहारिणीं
[8]शोभामित्यभिधायिनि प्रियतमे [9]तद्वेणिकासंस्पृशि ।

1. प्रियतरालापप्रेमादिख्यापकं. A. प्रियतराख्यानं. 2. प्रसवदलविलापः. 3. A. प्रौढ. 4. अपि गति. 5. स्पृशा. 6. A रसोद्भूतो रसवत्. 7. A. नाभ्याभु. 8. लक्ष्मी. 9. तद्वीटिका.

शय्योपान्तनिविष्टसस्मितवधूनेत्रोत्सवानन्दितो
निर्यातश्शनकैरलीकवचनोपन्यासमालीजनः ॥ ''

किञ्चिदारभमाणस्य[1] कार्यं दैववशात्पुनः ॥ ३९ ॥
तत्साधनसमापत्तिः समाहितमिदं यथा ।

" मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥ "

तदुदा[2]त्तं यन्महत्त्वमाशयैश्वर्ययोर्यथा ॥ ४० ॥

" गुरोश्शासनमत्येतुं न शशाक स राघवः ।
यो रावणशिरश्छेदकार्य[3]भारेऽप्यविक्ल[4]वः ॥ "

" रत्नस्तम्भेषु [5]सङ्क्रान्तैः प्रतिबिम्भशतैर्वृतः ।
ज्ञातो लङ्केश्वरः कृच्छ्राद्राञ्जनेयेन तत्त्वतः ॥ "

सत्यार्थापह्नवादन्यप्ररो[6]होऽपह्नुतिर्यथा ।

" नेयं निशा दिवस एव भवेत्कथं मे
निद्रान्यथा नयनयोर्युगलं न याति ।
नायं शशी तपन एव तनोति ताप-
[7]मुत्पात एव यदिमास्तु विभान्ति ताराः ॥ "

एकरूपमनेकार्थं श्लिष्टं बहुविधं यथा ॥ ४१ ॥

" प्रौढपयोधरधारा[8]
प्रावृण्मलिनाम्बरा प्रवाप्पधरा[9] ।
[10]मानसगराजहंसा
मानवतीवाद्य भाति मदनार्त्ता ॥ "

1. A. माणः स्यात्. 2. A. उदात्तमृद्धिसहितश्लाध्यं वान्योपलक्षणम् 3. कार्यभावे. 4. अविक्रियः. 5. संक्रान्तप्रतियत्न. 6. प्रकारो. 7. मुक्ताम्त एव. 8. A. भारा. 9. धारा. 10. मानसचर.

गुणजातिक्रियादीनां [1]यत्तु वैकल्यदर्शनम् ।
विशेषदर्शनायैव विशेषोक्तिर्मता यथा ॥ ४२ ॥

" धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशां
दृशां कोणो[2]बाणः सुहृदपि [3]जडात्मा हिमकरः ।
तथाप्येकोऽनङ्गस्त्रिभुवनमपि व्याकुलयति
क्रियासिद्धिस्सत्त्वे भवति महतां नोपकरणे ॥ "

यत्प्रसिद्धगुणैः[4]स्साम्यकथनं यस्य कस्यचित् ।
स्तुत्या वा निन्दया तुल्ययोगिता सा मता यथा ॥ ४३ ॥

" यमः कुबेरो वरुणः सहस्राक्षो भवानपि ।
बिभ्रत्यनन्यविषयां लोकपाल इति श्रुतिम् ॥ "

" सङ्गतानि मृगाक्षीणां तटिद्विलसितानि[5]च ।
[6]क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥ "

उक्तैः [7]स्ववाक्यैः यः कश्चिद्विरुद्धार्थः[8] प्रतीयते[9] ।
विरोध इति विज्ञेयः स्सोऽपि नानाविधो यथा ॥ ४४ ॥

" मृणालबाहु रम्भोरु पद्मोत्पलदलेक्षणम् ।
अपि ते रूपमस्माकं तन्वि तापाय कल्पते ॥ "

अप्रस्तुतस्तुतिःसा स्यादप्रकाण्डेऽपि या स्तुतिः ।
सेवादिक्लेशनिर्विण्णमानसेन[10] कृता यथा ॥ ४५ ॥

" मन्दिरमरविन्दकुटी बिसमशनं शयनमम्बुजदलानि ।
कल्लोला [11]हिन्दोला मरालयूनोस्तपांसि भूयांसि ॥ "

यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ मता ।

---

1. यत्र+यथा. 2. कोणा बाणाः. 3. जडः सैन्यमबलाः. 4. साकं.
5. A. न्यपि. 6. A. क्षणं न तिष्ठन्ति घना घनारब्धान्यपि स्वयम्. 7. परार्थैः.
8. A. विरुद्धोऽर्थः; विरोधार्थः. 9. प्रसाध्यते. 10. नैर्वर्ण्यमापन्नेन. 11. आन्दोला

" कीर्तिस्ते दयिता [1]तदीयजठरे लोकत्रयं वर्तते
तस्मात्त्वं जगतां पिता पितृधनं [2]तेनार्थिनां त्वद्धनम् ।
[3]त्यागं ते जगदेकमल्लनृपते त्यागं न मन्यामहे
कस्त्यागः स्वकुटुम्बपोषणविधावर्थव्ययं कुर्वतः ॥ "

अर्थान्तरमुपन्यस्य किञ्चित्तत्सदृशं यदि ॥ ४६ ॥
सदसद्वा निदर्श्येत निदर्शनमिदं यथा ।

" अणुमपि परकीयं हन्त ! सन्तो नयन्ते
गुणमधिकमनोज्ञं[4] तद्धि तेषां स्वभावः ।
सरसिजकुहरान्तः पत्रमात्रप्रभूतं
परिमलमपि वाताः किं न विस्तारयन्ति ॥ "

" दुर्जनः परिहर्तव्यो धीमता सख्यवैरयोः ।
श्वा भवत्यपकाराय [5]लिहन्नपि दशन्नपि ॥ "

सहोक्तिः सह भावानां वस्तूनां कथनं यथा ॥ ४७ ॥

दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिः सह ।
सह दीर्घा मम श्वासैरिमास्संप्रति रात्रयः ॥ ४८ ॥

पाण्डुराश्च ममैवाङ्गैः [6]सह ताश्चन्द्रभूषणाः ।
[7]काम्भोजास्समरे सोढुं तस्य वीर्यमनीश्वराः ॥ ४९ ॥

गजालानपरिक्लिष्टैरङ्कोलैः सार्धमानताः ।
अर्थानां यो विनिमयः परिवृत्तिस्तु[8] सा यथा ॥ ५० ॥

" क्रयविक्रयदक्षस्ते खड्गो भूपाल वैरिणाम् ।
हृत्वा भूमण्डलं [9]दत्ते रम्भायाः कुचमण्डलम् ॥ "

1. त्वदीय. 2 तत्तंश्च सम्भृज्यते. 3. A. वीरश्रीरणरङ्गमल्लनृपते. 4. गुरुत्वं. 5. स्पृशन्नपि. 6. सार्धं [illegible] चन्द्रभूषणः. 7. काम्बोजा. 8. : मिथो. 9. धत्ते.

आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा ।

" सव्यार्धजानिः सनकादिवन्द्यः
स्फुरल्ललाटः कमलारिजूटः ।
मुदे च देवोऽस्तु मुमुक्षुमृग्यः
श्रीकण्ठनाथः श्रितवत्सलो वः ॥ "

रोषात्प्रियवदुक्तिर्या वक्रोक्तिः कथ्यते यथा ॥ ५१ ॥

" साधु दूति ! पुनः साधु कर्तव्यं किमतः परम् ।
यन्मदर्थे [1]विलूनासि दन्तैरपि नखैरपि ॥ "

नानालङ्कारसंयोगात्सङ्करः कथ्यते यथा ।

" आक्षिपन्त्यरविन्दानि मुग्धे ! तव मुखश्रियम्[2] ।
[3]कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ "

दिङ्मात्रमत्र कथितं सङ्ग्रहत्वान्न विस्तृतिः[4] ॥ ५२ ॥

अथ प्रमाणालङ्काराः कथ्यन्ते सांप्रतं क्रमात् ।
प्रत्यक्षमेकं चार्वाकाः काणादास्सौगताः पुनः ॥ ५३ ॥

अनुमानं च तच्चाथ सांख्याः शाब्दं च ते अपि ।
न्यायैकदेशिनोऽप्येवमुपमानं च केचन ॥ ५४ ॥

अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ।
अभावषष्ठान्येतानि भाट्टवेदान्तिनस्तथा ॥ ५५ ॥

सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः ।
इन्द्रियाणामर्थयोगे यज्ज्ञानमुपजायते ॥ ५६ ॥

---

1. विभिन्नासि...; विलग्नासि. 2. मुखाम्बुजम्. 3. कोशद्वन्द्वसमग्रणां.
4. विस्मृतिः.

तत्प्रत्यक्षं समाख्यातं मनसा चेन्द्रियाणि षट् ।
प्रत्यक्षं द्विविधं निर्विकल्पकं सविकल्पकम् ॥ ५७ ॥

नामादिभिर्विशिष्टार्थविषयं सविकल्पकम् ।
अवशिष्टार्थविषयं प्रत्यक्षं निर्विकल्पकम् ॥ ५८ ॥

इन्द्रियोत्पन्नविज्ञानं प्रत्यक्षालङ्कृतिर्यथा ।

"क्रान्तकान्तवदनप्रतिबिम्बे
भग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणुदितालिनिशीथे
निर्ववार मधुनीन्द्रियवर्गः ॥"

निवृत्तिर्मनसो वृत्तिरिन्द्रियैरुपनीयते ॥ ५९ ॥

हेतुना हेतुमज्ज्ञानमनुमानं तदुच्यते ।
दृष्टं सामान्यतो दृष्टमिति चास्य विधाद्वयम् ॥ ६० ॥

पूर्वं प्रत्यक्षयोग्यार्थमन्यार्थमितरद्यथा ।

"[1]चूर्णबभ्रुललितस्रगाकुलं
छिन्नमेखलमलक्तकाङ्कितम् ।
उत्थितस्य शयनं विलासिनः
तस्य विभ्रमरतान्यवेदयत ॥"

"परिरम्भपरं निजं निरुन्धे
करयोः केवलमेव कर्म कान्तम् ।
पुलकैः पुनरुच्यते भवत्याः
पुर एव स्फुटमायताक्षि भावः ॥"

---

1. चूर्णनागलतचूर्णसङ्कुलं भिन्नमेखलमलक्तकाञ्चितम्.

[1]यथार्थदर्शिनः पुंसो यथादृष्टार्थवादिनः ॥ ६१ ॥

उपदेशः [2]परार्थो यः आगमः स मतो यथा ।
परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ॥ ६२ ॥

वदामि तत्त्वं भवतो न विधेया कदाचन ।
सादृश्यात्सदृशज्ञानमुपमानमिहोच्यते ॥ ६३ ॥

अनुभूतार्थमननुभूतार्थं द्विविधं यथा ।

" अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्षीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥ "

" तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ।
[3]समूहस्तारकाणां यः शकटाकारमाश्रितः ॥ "

दृष्टः[4] श्रुतोपि यो वार्थः स्वस्यैवानुपपत्तितः ॥ ६४ ॥

प्रसूतेऽर्थान्तरे बुद्धिं साऽर्थापत्तिर्मता यथा ।
निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ॥ ६५ ॥

अन्यथा नोपपद्येत पयोधरभरस्थितिः ।

" रुचिधा[5]म्नि भर्तरि भृशं विमलाः
परलोकमभ्युपगते विविशुः ।
ज्वलनं त्विषः कथमिवेतरथा
सुलभोन्यजन्मनि [illegible] एव पतिः ॥ "

अर्थस्याविद्यमानत्वमभाव इति कथ्यते ॥ ६६ ॥

---

1. यथार्थदर्शनः पुंसा. 2. पदार्थो. 3. समृहु. 4. दृष्टिश्रितोपि. 5. अविभाव्यः.

प्रागभावोऽथ प्रध्वंसश्चान्योन्याभाव एव च ।
अत्यन्ताभाव इत्येवं चतुर्धा भिद्यते यथा ॥ ६७ ॥

"अनभ्यासेन विद्यानामसंसर्गेण धीमताम् ।
अनिग्रहेण चाक्षाणां व्यसनं जायते नृणाम् ॥"

"धृतिरस्तमिता रतिश्च्युता
विरतं गेयमृतुर्निरुत्सवः ।
गतमाभरणप्रयोजनं
परिशून्यं शयनीयमद्य मे[1] ॥"

कर्णोत्पलं न चक्षुस्ते न चक्षुःश्रवणोत्पलम् ।
इति जानन्नपि [2]मनो मन्यते दीर्घनेत्रताम् ॥ ६८ ॥

"सव्यापसव्यत्यजनाद्विरुक्तैः
पञ्चेषुबाणैः पृथगर्जितासु ।
दशासु शेषा खलु तद्दशाया
तया नभः पुष्यतु कोरकेण ॥"

आढकं सम्भवेद्द्रोणे सहस्रेपि शतं यथा ।
आहुरेवं विधं ज्ञानं सम्भवं मुनयो यथा ॥ ६९ ॥

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यते मम तु कोऽपि समानधर्मा
कालोह्ययं निरवधिर्विपुला च पृथ्वी ॥"

प्रवादपारम्पर्यं यदनिर्दिष्टप्रवक्तृकम्[3] ।
ऐतिह्यमिति विज्ञेयं प्रमाणं पण्डितैर्यथा ॥ ७० ॥

---

1. ते. 2. जनो. 3. प्रवर्तकम्.

"यासि भीरु ननु तत्र निशीथे
ध्वान्तरुद्धदशदिक्प्रविभागे[1] ।
कर्मनीह वटभूरुहि यक्ष-
स्तिष्ठतीति न जना विचरन्ति ॥"

नानाविधालङ्कृतिहृद्यवर्णां[2] कन्यामिवैतां कवितां वृणीष्व ।
अस्यां यशः सन्ततिवृद्धिरस्तु विवेकविद्याधर मन्मभूप ॥ ७१ ॥

इत्यमृतानन्दयोगीन्द्रविरचितेऽलङ्कारसङ्ग्रहे अलङ्कारनिर्णयो नाम
पञ्चमः परिच्छेदः ॥

---

1. प्रति भागे. 2. नव्यवर्णा.

## षष्ठः परिच्छेदः

अथ दोषाः प्रकीर्त्यन्ते पदानां प्रथमं क्रमात् ।
श्रुतिकट्वसमर्थं च च्युतसंस्कृत्यवाचकम् ॥ १ ॥

निरर्थकं चाप्रयुक्तमश्लीलं ग्राम्यमेव च ।
नेयार्थानुचितार्थे च सन्दिग्धं क्लिष्टमेव च ॥ २ ॥

अविमृष्टविधेयांशं विरुद्धमतिकृत्तथा ।
अप्रतीतमथैतेषां क्रमाल्लक्षणमुच्यते ॥ ३ ॥

परुषाक्षरविन्यासं श्रुतिकट्विष्यते यथा ।

" अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स[1] तन्वङ्ग्या कार्तार्थ्यं लभते कदा[2] ॥ "

अत्र कार्तार्थ्यमिति यत्पदं श्रुतिकट्विच्यते ॥ ४ ॥

असमर्थमभिप्रेतं यद्वक्तुं न क्षमं यथा ।

" तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः ।
सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम् ॥ "

हन्तीति हिंसागत्यर्थोऽप्यसमर्थो गताविह ॥ ५ ॥

शास्त्रोक्तलक्षणापेतं च्युतसंस्कृति तद्यथा ।

" एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत्पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥ "

---

1. अलिङ्गितस्य. 2. कथम्.

न याच्ञार्थे नाथते स्यादाशिष्येवात्मने पदम् ॥ ६ ॥

अवाचकं न यत्नार्थे [1]प्रयुक्तं वक्ति तद्यथा ।

“अवन्ध्यकोपस्य [2]निहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना
न जातहार्देन न विद्विषादरः ॥ ”

जीवसाधारणं जन्तुपदं [3]नो दातृवाचकम् ॥ ७ ॥

निरर्थकं भवेत्पादपूरणैकफलं यथा ।

“ बिभर्ति यश्च देहार्धे प्रियामिन्दुं हि मूर्धनि ।
स वै देवः खलु त्वां तु पुनातु मदनान्तकः ॥ ”

च वै हीत्यादि शब्दानामर्थस्यार्थो न विद्यते ॥ ८ ॥

आम्नातमप्यप्रयुक्तं कविभिर्नादृतं यथा ॥

“यथाऽयं [4]दारुणाचारः [5]सर्वथैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य[6] पिशाचो राक्षसोऽपि वा ॥ ”

पुंसि दैवतशब्दोऽयं कविभिर्न प्रयुज्यते ॥ ९ ॥

येनासभ्यः[7] पदेनार्थो द्योत्यतेऽश्लीलमीरितम् ।
जुगुप्साऽमङ्गलव्रीडाव्यञ्जकत्वात्त्रिधा यथा ॥ १० ॥

“ लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण[8] इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन [9]ददती वायुं स्थिता तस्य सा
[10]भ्रान्त्या धूर्ततयाथवा नतिमृते तेनानिशं चुम्बिता ॥ ”

अत्राननेन [11]ददती वायुं सेति जुगुप्सितम् ।

1. त्वयुक्तं. 2. विहन्तु. 3. ना धातृ; नादातृ. 4. दारुणाकारः 5. सर्वदैव.
6. अयं; असो. 7. असत्यः. 8. रूषितेक्षण. 9. दधती. 10. पत्या. 11. दधती.

" [1]मृदुपवनविभिन्नो मत्प्रियाया विनाशात्
घनरुचिरकलापो[2] निःसपत्नोऽद्य जातः ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सतिकुसुमसनाथे कं हरेदेष बर्ही ॥ "

मत्प्रियायाविनाशादित्येतत्पदममङ्गलम् ॥ ११ ॥

" साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥ "

अत्र साधनशब्दोऽयं व्रीडोत्पत्तिकरो मतः ।
ग्रामीणयोग्यं यद्ग्राम्यं निन्द्यं नागरिकैर्यथा ॥ १२ ॥

" राकाविभावरीकान्तसङ्क्रान्तद्युति ते मुखम् ।
तपनीयशिला[3]शोभा कटिश्च हरते मनः ॥ "

कटिशब्दोऽत्र [4]गोप्याङ्गवाचकत्वेन गर्ह्यते ।
नेयार्थं [5]यदसामर्थ्याद्दूरार्थद्योतकं यथा ॥ १३ ॥

" शरत्काल[6]समुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥

चपेटशब्दः सामर्थ्यान्नाभिधत्ते जयं त्विह ।
तदेवानुचितार्थं स्याद्यस्यार्थोऽनुचितो यथा ॥ १४ ॥

" तपस्विभिर्या सुचिरेण लभ्यते
[7]प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं [8]मनस्विनो
रणाध्वमेधे पशुतामुपागताः ॥ "

[9]व्यनक्त्ययुक्तं पशुपदं शूरे कातरतामिह ।

1. मधुपवनविभिन्ना. 2. घनरुचिरकलापा. 3 शिखा. 4. गुह्याङ्ग. 5 यदसामर्थ्यान्मूलार्थं; यदसामर्थ्यमूलार्थं. 6. समुल्लास. 7. प्रयत्नतो या च मखीभिरिष्यते. 8. यशस्विनो. 9. व्यनक्तघर्थं.

विवक्षितार्थादन्यच्च सन्दिग्धं द्योतयेद्यथा ॥ १५ ॥

" आलिङ्गितस्तत्र भवान् सांपराये जयश्रियम् ।
आशीः परम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥ "

अत्र वन्द्यामिति पदं बन्दीकृतनमस्ययोः[1] ।
क्लिष्टं व्यवहितार्थस्य द्योतकं स्यात्पदं यथा ॥ १६ ॥

" अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥ "

अत्रिलोचनसंभूतश्चन्द्रस्तज्ज्योतिरुद्गमात् ।
भासीनिकुमुदानीति क्लिष्टत्वं व्यवधानतः ॥ १७ ॥

अविमृष्टविधेयांशं [2]प्राधान्याद्येन तद्यथा ।

" स्रस्तं नितम्बादवलम्बमानां
मुहुर्मुहुः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण
मौर्वीं द्वितीयामिव कार्मुकस्य ॥ "

प्राधान्येनात्र[3] निर्दिष्टो विधेयांशो द्वितीयया ॥ १८ ॥

इष्टान्यदुष्टधीकारी विरुद्धमतिकृद्यथा ॥

"सुधाकरकराकारविशारदविचेष्टितः[4] ।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥ "

प्रयोजनं विना मित्रमित्यत्रार्थे विवक्षिते ॥ १९ ॥

[5]अकार्ये मित्रमित्यन्यो विरुद्धार्थः प्रतीयते ।

1. समस्ययोः. 2. प्राधान्याद्यन्न. 3. पुनः पुनः. 4. विचेष्टितम्.
5. अकार्यमित्यन्यो

शास्त्रमात्रप्रसिद्धार्थमप्रतीतं मतं यथा ॥ २० ॥

" सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत् कर्मबन्धनम् ॥ "

अत्राशयपदं वासनार्थमागमसिद्धिमत् ।
दोषान् पदैकदेशेषु यथायोग्यं वदाम्यहम् ॥ २१ ॥

" अलमतिचपलत्वात् स्वप्नमायोपमत्वा-
त्परिणतिविरसत्वात्सङ्गमेनाङ्गनायाः ।
वयमिति शतकृत्वः तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ "

त्वप्रत्ययस्य बाहुल्यादिह श्रुतिकटूच्यते ।

" आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः संतापितानां दृशाम् ।
सम्प्रत्येव निषेकमश्रुपयसा देवस्यचेतोभुवो
भिल्लानामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥ "

निरर्थकं बहुत्वं स्याद्दृशामित्येकयोषितः ॥ २२ ॥

फलस्याकर्तृगामित्वाद् कुत्रश्चाप्यात्मने पदम् ॥

" यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेनशास्त्रपरिशीलनकीर्तनेन ।
सौजन्यमान्यजनिरूर्जितमार्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥ "

पूयेत्यत्र जुगुप्सार्थमश्लीलमवगम्यते ॥ २३ ॥

" अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि ।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ "

प्रेतेत्यत्रामङ्गलाश्लीलमत्र श्लोकेऽवगम्यते ।

" कस्मिन्कर्मणि सामर्थ्यमस्य नोत्तपते तराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥ "

भूतपूर्वे चरट्त्वत्र साधुचारीति संशयः ॥

" किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥ "

वचःशब्देन गीःशब्दो लक्ष्यतेऽत्रेत्यवाचकम् ॥ २४ ॥

प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धिहतवृत्तम् ।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥ २५ ॥

अर्थान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम् ।
अपदस्थपदसमासं सङ्कीर्णं गर्भितं प्रसिद्धिहतम् ॥ २६ ॥

भग्नप्रक्रममक्रममपतपदार्थं रसच्युतं च तथा ।
अप्रस्तुतार्थमित्यपि भवन्ति वाक्येष्वमी दोषाः ॥

प्रतिकूलवर्णमेतद्रसानुकूलाक्षरं न यद्धि तथा ॥ २७ ॥

" अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि ! माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ "

शृङ्गारे टादीनां कठिनानां नानुकूल्यमस्तीह ।
उत्वौत्वे यत्र कृते लुप्तो वा स्याद्विसर्जनीयश्च ।

उपहतलुप्तविसर्गं दुष्टं तद्वाक्यमामनन्ति यथा ॥ २८ ॥

" धीरो विनीतो निपुणो वराकारो नृपोऽत्रसः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविता[1]: ॥ "

उपहततामाद्यार्धे याति विसर्गः परेण लुप्तत्वम् ।
वैरूप्यं विश्लेषोऽश्लीलत्वं कष्टता च सन्धेः स्युः ॥ २९ ॥

दोषास्तत्तद्वाक्यं विसन्धि विबुधाः क्रमाद्वदन्ति यथा ।

" राजन् विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसंपदमेत्य भातः ॥ "

सकृदेवहितेऽत्र दोषे विहितेऽप्यसकृच्च भवति वैरूप्यम् ॥ ३० ॥

" तत उदित उदारहारहारि-
द्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्तकान्तकान्ति-
र्बत ! मुक्तामणिवच्चकास्त्यनर्घः ॥ "

अत्र विहितेऽपि दोषो विश्लेषस्त्वसकृदेव विज्ञेयः ।

" विद्यामभ्यसतो[2] रात्रावेति या भवतः प्रिया ।
व नता गुह्यकेशानां [3]कथं ते पेलवं वनम् ॥ "

सन्धावश्लीलत्वं दोषोऽत्र विवेकशालिभिर्ज्ञेयः ॥ ३१ ॥

" उर्व्यसावत्र तर्वाली सर्वतो चार्ववस्थितिः ।
नात्र प्रयुज्यते गन्तुं शिरो नमय तन्मनाक् ॥ "

इह कष्टत्वं सन्धेः क्लिष्टतया कथ्यते सकृद्दोषः ।
अयथात्वं गुरुलघ्वोः वर्णानां यत्रहीनताधिक्ये ॥ ३२ ॥

1. प्रचारिता. 2. भ्यस्यतो. 3. कमते.

भग्नच्छन्दोवाक्यं हतवृत्तं चेति तद्वदन्ति यथा ।

"कामेन पञ्चापि बाणा विमुक्ता
मृगेक्षणास्वित्ययथागुरुत्वम् ।
मदनबाणाः निशिताः पतन्ति
वामेक्षणास्वित्ययथालघुत्वम् ॥"

इन्दुपादाः शिशिराः स्पृशन्तीत्यूनवर्णता ।
स कारस्य किसलयान्न्यार्द्राणीत्यधिकाक्षरम् ॥ ३३ ॥

पादान्ते मध्ये वा यतिर्विरामोऽस्य भग्नतात्र यथा ।

"अदित्यस्य महति वंशे जातो नृपतिरेष धनकीर्तिः ।
भूरिदयालङ्कारः प्रभूतगुणवत्सलो जयत्यवनौ ॥"

येन विना यद्वाक्यं न्यूनं तन्न्यूनपदमुशन्ति यथा ॥ ३४ ॥

"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनया
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥"

अस्माभिरिति विशेष्याभावादिह वाक्यमभिहितं न्यूनम् ।
यदभावादपि पूर्णं वाक्यं तेनाधिकपदमत्र यथा ॥ ३५ ॥

"स्फटिकाकृतिनिर्मलः प्रकामं
प्रतिसङ्क्रान्तनिशातशास्त्रतत्त्वः ।
अविरुद्धसमन्वितोक्तियुक्तिः
प्रतिमल्लास्तमयोदयः स कोऽपि ॥"

आकृतिपदेन वाक्यं विनापि संपूर्णमेव भवतीह ।
कथितपदं यद्यस्मिन् पदस्य कथितस्य कथनमेव यथा ॥ ३६ ॥

"[1]अधिकतरलतल्पं कल्पितस्वापलीला
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु ! कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥ "

लीलेति पूर्वकथितं पुनरपि लीलेति कथितमेतस्मिन् ।
यस्मिन्नधः प्रकृष्टं पतत्प्रकर्षं तदामनन्ति यथा ॥ ३७ ॥

"कः कः कुत्र न घुर्घुरायितघुरी घोरो घुरेत्सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
[2]सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥ "

अत्र करिणः प्रकृष्टान्महिषाणामुपरिकीर्तनं कुरुते ।
पुनरपि समाप्य कथितं समाप्तपुनरात्तमिति वदन्ति यथा ॥ ३८ ॥

"केङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकानां रवः
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥ "

अत्र समाप्तोऽप्यर्थः पुनरप्यादीयते ऽन्त्यपादान्त्ये ।
अर्थान्तरैकवाचकमपरार्थगतैकवाचकं तु यथा ॥ ३९ ॥

---

1. अधिमृदुतर. 2. सिंहोऽस्मिमिहलीन; सिंहे.

“ मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि धर्मः कठोरः ।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिर्वीक्षिता शिक्षिता च ॥ ”

इहतच्छब्दो हेतुः सिचयान्तं मूर्ध्नि विरचयेत्यत्र ।
अभवन्मतयोगं तद्यत्र समासे पदं गुणीभूतम् ॥ ४० ॥

नान्यैः प्रधानभूतैर्लभते योगं प्रयोजनाय यथा ।

“ चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशो दुन्दुभिः ॥ ”

सङ्ग्रामाध्वरशब्दः समासगो दोषभावमेत्यत्र ॥ ४१ ॥

अनभिहतवाच्यमेतद्यत्र न वक्तव्यमभ्यधायि यथा ।

“ त्वयि निसर्गरतेः प्रियवादिनः
प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं [1]मम पश्यसि
त्यजसि मानिनि ! दासजनं यतः ॥ ”

अत्रावश्यं वाच्यं पश्यस्यपराधलवमपीति पदम् ॥ ४२ ॥

अस्थानस्थपदं तद्यत्रास्थाने स्थितं पदं हि यथा ।

“ लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् ।

1. मयि.

पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितह्रीतया
प्रोन्मृष्टः करपल्लवेन कुटिला ताम्रच्छविः पातु वः ॥ "

कुटिलाताम्रच्छविरिति नखलक्ष्मेत्यादितः पुरा वाच्यम् ॥ ४३ ॥

अस्थानस्थसमासं यत्नास्थाने समासशालि यथा ।

"[1]अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिस्सरदलिश्रेणीकृपाणं शशी ॥ "

क्रुद्धोक्तावत्र कृतो न समासः किन्तु कविवचस्येव ॥ ४४ ॥

सङ्कीर्णं यत्रेतरवाक्यपदानीतरत्र सन्ति यथा ।

" किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥ "

अधिकस्फुटमितरेतरवाक्यपदानां मिथः प्रवेशोऽत्र ॥ ४५ ॥

[2]क्लिष्टत्वमेकवाक्ये वाक्यबहुत्वे तु भवति सङ्कीर्णम् ।
गर्भितमितरद्वाक्यं वाक्यस्यैकस्य यत्र मध्येऽस्ति ॥ ४६ ॥

" परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥ "

वाक्यमिदमितरवाक्ये स्थितमिह भवतो वदामि तत्त्वमिति ।
यत्र प्रसिद्धिहीनं प्रसिद्धियुतमुच्यते पदं तु यथा ॥ ४७ ॥

" महाप्रलयमारुतक्षुभितपुष्कलावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।

1. अध्याप्तिः 2 क्लिष्टत्वमेव.

रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
 कृतोऽद्य समरोदधेरयमभूतपूर्वक्रमः ॥ ”

[1]रव इति शब्दविशेषणं[2] शब्दमात्ने प्रसिद्धिभाग्भवति ।
भग्नप्रक्रममुक्तं यत्न प्रक्रान्तरूपभङ्गः स्यात् ॥ ४८ ॥

तदनेकधा [3]विभेदैः प्रकृतिप्रत्ययमुखैः क्रमेण यथा ।

“ नाथे निशाया नियतेर्नियोगा-
 दस्तं गते हन्त निशापि याता ।
कुलाङ्गनानां हि दशानुरूपं
 नातः परं भद्रतरं किमस्ति ॥ ”

गत इति तु प्रकान्ते यातेति प्रकृतिरत्र भङ्गवती ॥ ४९ ॥

“ यशोऽधिगन्तुं सुखलिप्सया वा
 मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां
 समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ”

अत्र सुखलिप्सयेति प्रत्ययभङ्गो विविच्य विज्ञेयः ।
अन्येऽप्यत्न ज्ञेयाः प्रत्ययभङ्गा न तु प्रपञ्च्यन्ते ॥ ५० ॥

यत्र[4] विहितः क्रमः स्यादक्रममिति वाक्यमामनन्ति यथा ।

“ निर्माणस्थितिसंहाररहेतवो जगतां मताः ।
विष्णुस्त्रिलोचनाम्भोजयोनयः [5]पालयन्तु वः ॥ ”
परमेष्ठिहरिहरा इति वाच्ये भग्नः क्रमो भवत्यत्र ॥ ५१ ॥
अमतपदार्थे[6] यत्र [7]प्रकृतविरुद्धार्थकथनमेव यथा ।

---

1. रुतमिति शब्दविशेषेण. 2. विशेषणेन. 3. विभिन्नम्. 4. विहितः. [5.] परिपान्तु. 6. परार्थं. 7. प्रकृति.

"राममन्मथशरेण ताडिता[1]
दुस्सहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता
जीवितेशवसतिं जगाम सा ॥"

प्रकृतरसेऽत्र विरुद्धं शृङ्गाररसस्यवर्णनं विहितम् ॥ ५२ ॥

यत्र रसोऽस्ति न वाक्ये रसच्युतं तदिति कीर्तयन्ति यथा ।

"एकपुच्छश्चतुष्पादः ककुद्मान् लम्बकम्बलः[3] ।
गोरपत्यं बलीवर्दो घासमत्ति सुखेन सः ॥"

जातिरपि नीरसत्वान्नालङ्कारोऽस्य किं तु दोषत्वम् ॥ ५३ ॥

अप्रस्तुतार्थमेतद्यत्राप्रस्तुतनुतिः करोति यथा ।

"तमालश्यामलं क्षारमत्यच्छमतिफेनिलम् ।
पादेन लङ्घयामास हनूमानेष सागरम् ॥"

नात्र श्यामलतादेः कथनं तत्रोपयोगि स्यात् ॥ ५४ ॥

अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ।
सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ॥ ५५ ॥

व्यर्थीकृतः सनियमा नियमविशेषाविशेषपरिवृत्ताः ।
साकाङ्क्षोक्तविरुद्धोद्धत्यपुनः स्वीकृतोऽश्लीलः ॥

विध्यनुवादनिवृत्तः सहचरभिन्नोऽर्थदोषाः स्युः ॥ ५६ ॥

विशेषणानामुक्तानां फलं यत्र न विद्यते ।
विशेष्यपोषकत्वेन सोऽपुष्टार्थो मतो यथा ॥ ५७ ॥

1. पीडिता. 2. निलयं. 3. कन्धरः

" अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः[1] ।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥ "

विमुक्तविश्रमानन्दौ पुष्यतो न रवेर्जयम् ।
कष्टः कृच्छ्रेण विज्ञेयः शब्दसङ्क्षेपतो यथा ॥ ५८ ॥

" कलशे निजहेतुदण्डजः
किमु चक्रभ्रमकारिता गुणः ।
स तदुच्चकुचौ भवन् प्रभा-
झरचक्रभ्रममातनोति यत् ॥ "

अत्यन्तव्यवधानेन ज्ञायतेऽर्थोऽत्र नो हठात् ।
अनाहतस्यैवोत्कर्षो वाक्ये स्याद्व्याहतो यथा ॥ ५९ ॥

" जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ "

अनाहत्येन्दुरेखां च श्लाघ्यते चन्द्रिकात्विह ।
एक एव द्विरुक्तोऽर्थः पुनरुक्तो मतो यथा ॥ ६० ॥

" अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं सम्भ्रमेण ! व्रज कृप ! समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरां को भयस्यावकाशः ॥ "

पौनरुक्त्यमिहार्थस्य प्रसिद्धं समपादयोः ।
[illegible] व्युत्क्रमो दुष्क्रमो यथा ॥ ६१ ॥

1. विक्रमानन्दः.

" भूपालरत्न ! निर्दैन्यप्रदानप्रथितोत्सव ! ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥ "

मातङ्गस्यात्र निर्देशो न्याय्यः प्रागेव बुध्यताम् ।
निर्लज्जैः कथितो योऽर्थो ग्राम्योऽसावुच्यते यथा ॥ ६२ ॥

" सपङ्कतलविन्यस्तसारङ्गखुरसन्निभम्[1] ।
आरोमशं मृगाक्षीणां वन्दे मदनमन्दिरम् ॥ "

इह ग्राम्यत्वमर्थस्य प्रसिद्धमवगम्यते ।
द्वेधा प्रतीयमानोऽर्थः सन्दिग्धोऽनिर्णयाद्यथा ॥ ६३ ॥

" मात्सर्यमुत्सार्य विचार्य कार्य-
मार्याः समर्यादमिदं वदन्तु ।
सेव्या नितम्बाः किमु भूधराणा-
मुत स्मरस्मेरविलासिनीनाम् ॥ "

विरक्तो वात्र रक्तोवा वक्ता चेन्निर्णयो भवेत् ।
निर्हेतुको विना हेतुं कार्यं यत्रोच्यते यथा ॥ ६४ ॥

" गृहीतं येनासीः परीभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्नविषयः[2] ।
परित्यक्तं तेन[3] त्वमसि[4] सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र ! त्वामहमपि यतः स्वस्ति भवते ॥ "

विमोक्ष्येऽहमपीत्यत्र न हेतुः शस्त्रमोचने ।
स प्रसिद्धिविरुद्धो यो लोकैरविदितो यथा ॥ ६५ ॥

" इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।

---

1. पदवीनिभम्. 2. कश्चित्सहचरः: 3. येन. 4. ॰ि.

इदं तद्दुस्साधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥ "

चक्रं मनोभवस्यास्त्रमप्रसिद्धमिहोच्यते ।
विद्याविरुद्धः स्मृत्यादिविरोधात्कथितो यथा ॥ ६६ ॥

" सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च श्रृणोति च ॥ "

उपरागं विना रात्रौ स्नानं तु श्रुतिगर्हितम् ।
व्यर्थीकृतो यच्छ्लाघ्यानां व्यर्थत्वापादनं यथा ॥ ६७ ॥

" प्राप्ताः श्रियः सकलकामदुघास्ततः किं
न्यस्तं पदं शिरसि विद्विषतां ततः किम् ।

सन्तर्पिताः प्रणयिनो विभवैस्ततः किं
[1]कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ "

अत्र व्यर्थत्वमेवोक्तमर्थानां न प्रयोजनम् ।
नियमोऽनुचितेऽर्थे यः स स्यात्सनियमो यथा ॥ ६८ ॥

" कटु रटति निकटवर्ती वाचाटष्टिट्टिभो यत्र ।
अपसरणमेव शरणं मौनं वा राजहंसस्य ॥ "

अत्रापसरणे युक्तो [2]नियमेनैवकारतः ।
मौनं वेत्यन्यपक्षस्य संभवा षणं हि यत् ॥ ६९ ॥

[3]नियमे सति वक्तव्ये तत्त्यागोऽनियमो यथा ।

" चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
हतान्येकेन रामेण मानुषेण पदातिना ॥ "

एकेनैवेति वक्तव्ये नैवात्र नियमः कृतः ॥ ७० ॥

---

1. कल्पस्थितं. 2. नियमो नैवकार्यतः; नैवकारतः. 3. नियमेनेति.

वाच्ये विशेषे सामान्याद्विशेषव्यत्ययो यथा ।

" श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
मन्त्रं तन्त्रमथ प्रयुज्य हरत[1] श्वेतोत्पलानां श्रियम्[2] ।
चन्द्रं चूर्णयत [3]क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दशदिशस्तद्वक्त्रमुद्राङ्किताः ॥ "

अत्र ज्योत्स्नामिति श्यामा विशेषोक्तिर्हि युज्यते ॥ ७१ ॥

सामान्योक्तौ विशेषोक्तिः सामान्यव्यत्ययो यथा ।

" कल्लोलवेल्लितदृषत्परुषप्रहारै[4]
रत्नान्यमूनि मकरालय[5] ! मावमंस्थाः ।
किं कौस्तुभेन विहितो[6] भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि[7] ॥ "

रत्नसामान्यतो नाम सिन्धोरत्र न कौस्तुभात् ॥ ७२ ॥

यत्र बाह्यार्थसापेक्षः साकाङ्क्षो गीयते यथा ।

" द्वारं द्वारमिता वृष्टिः[8] शीतवातादिदुःसहा[9] ।
दिशो नीरन्ध्रतिमिरनिगीर्णा इव निष्प्रभाः ॥ "

आकाङ्क्षतेऽत्र बाह्यार्थं [10]त्वरयोत्पाट्यतामिति ॥ ७३ ॥

स स्यादुक्तविरुद्धोऽर्थो विरोधस्त्वर्थयोर्यथा[11] ।

" न स्वर्गो नापि नरको धर्माधर्मौ न तत्फले ।
धन्योऽसि यस्त्वं सर्वस्वं ब्राह्मणेभ्यः प्रयच्छसि ॥ "

परलोकाद्यभावोक्तेर्विरुद्धं दानकीर्तनम् ॥ ७४ ॥

त्यक्तेऽपि पुनरुपात्तस्त्यक्तपुनः स्वीकृतो मतः स यथा ।

---

1. हरत:. 2. श्रय:; स्मितम्. 3. क्षणेन. 4. पतनप्रहारै. 5. मकराकर
6. भरतो विहितं. 7. हि. 8. कृष्टि:. 9. दि: सहा. 10. त्वरयोद्घाटय. 11.
धोऽर्थो त्वार्थयोर्यथा; त्वोक्तयोर्द्वयो:.

" अरे ! रामाहस्ताभरण ! [1]भसलश्रेणिशरण !
स्मरक्रीडाव्रीडाशमन ! विरहिप्राणदमन ! ।
सरोहंसोत्तंस ! प्रचलदलनीलोत्पलसखे !
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥ "

विरहिदमनेति मुक्त्वा स्वीकुरुते सखिपदेन पुनरेव ॥ ७५ ॥
अश्लीलो मुख्यार्थादन्यो व्रीडाकरो मतः स यथा ।

" हन्तुमेव [2]प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाऽस्य जायते पातो न तथा पुनरुन्नतिः ॥ "

अत्र ध्वन्यो मुख्यादन्यार्थो ज्ञायते हि लज्जायै ॥ ७६ ॥
विध्यनुवादविवृत्तो[4] विध्यनुवादौ [5]विवर्तितौ स यथा ।

" प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा
मकेशवमपाण्डवं भुवनमद्य निस्सोमकम् ।
इयं परिसमाप्यते रणकथाद्य दोःशालिना-
मपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥ "

शयितः परिबोध्य स इति वक्तव्यमिहानुवादविधियुगळम् ॥ ७७ ॥
सहोत्कृष्टैर्निकृष्टोक्तिर्भिन्नं सहचरैर्यथा ।

" श्रुतेन बुद्धिर्व्यसनेन मूर्खता
मदेन नारी सलिलेन निम्नगा ।
विद्या शस्त्रेण धृतिः समाधिना
नयेन चालङ्क्रियते नरेन्द्रता ॥ "

उत्कृष्टेभ्यः श्रुतादिभ्यो भिन्ने व्यसनमूर्खते ॥ ७८ ॥
दोषा एव गुणीभावं प्राप्नुवन्ति क्वचित्क्वचित् ।

---

1. कमलकुन्दरेण. 2. प्रवृद्धस्य. 3. सञ्जायते. 4. निवृत्तो. 5. निवर्तितौ.

"सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट
पितॄनताप्सीत्सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ
समूलघातं न्यवधीदरींश्च ॥"

उदाहरणकाव्यत्वान्न दुष्टं श्रुतिकट्वपि ॥ ७९ ॥

प्रहेलिकाद्व्यर्थिबन्धैकाक्षरद्व्यक्षरादिषु ।
क्लिष्टासमर्थनेयार्था वाचकाद्या न दूषकाः ॥ ८० ॥

"देवराजो मया दृष्टो वारिवारणमस्तके ।
अदन्नर्कं च सोमं च विषं पीत्वा क्षयं गतः ॥"

वारिवारणशब्दोऽत्र नेयार्थोऽपि न दुष्यति ।
असमर्थावपि विषक्षयौ स्वार्थे न दुष्यतः ॥ ८१ ॥

अन्यदप्येवमेवोह्यमुदाहरणदर्शने ।

"बल्यरिक्त्वरी पातां साम्बुव्यम्बुघनोपमौ ।
सदृशौ बककाकाभ्यां न वै तु हि च वै तु हि ॥"

निरर्थकं न दुष्टं स्याद्धास्येच्छान्दसभाषिते ॥ ८२ ॥
बल्यरिक्त्वरीत्यत्र कष्टसन्ध्यप्यदूषणम् ।

"कण्डूतेरप्रतीकारादन्तर्लिङ्गविमर्दनात्[1] ।
न द्रवन्ति न तृप्यन्ति योषितो नीचमेहने[2] ॥"

अत्र व्रीडाऽश्लीलमपि कामतन्त्रे न दूषणम् ॥ ८३ ॥

"उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ! ।
क्लेदने स्त्रीव्रणे सक्तिरक्रिमेः कस्य जायते ॥"

जुगुप्साश्लीलमप्यत्र विरक्तोक्तौ न दूषणम् ।

"पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।

1. चमर्दनात्; ङ्गविमर्दनात्. 2. मैथुने.

'विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥"
सन्दिग्धमप्यत्रादुष्टं वक्तृबोद्धव्यभेदतः ॥ ८४ ॥

"ग्रहैस्ततः पञ्चभिरुच्चसंस्थितै-
रसूर्यगैः सूचितभाग्यसंपदम् ।
असूत पुत्रं समये शचीसमा
त्रिसाधना शक्तिरिवार्थमक्षयम् ॥"

अप्रतीतमपि ज्योतिःप्रसङ्गेऽत्र न दुष्यति ।

"म्रियतां म्रियतां तन्वि ! किं वा जीविक्यानया ।
जीवितं [2]सखि मानाय नैव चेज्जीवितेन किम् ॥"

अस्मिन्विषण्णवचने पौनरुक्त्यं गुणो मतः ॥ ८५ ॥

"गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलत्काञ्चीनितम्बाम्बरा[3] ।
मा मा मानद ! मातिमामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम्"

मामेत्यादि न्यूनपदं पारवश्ये न दूषणम् ।

"यद्वञ्च नाहितमतिर्बहुचाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥"

गुणोऽन्ययोगव्यावृत्यै विदन्तीत्यधिकं पदम् ॥ ८६ ॥

विषादे विस्मये हर्षे कोपे दैन्येऽवधारणे ।
[4]प्रसादनेऽनुकम्पायां द्विस्त्रिरुक्तं न दुष्यति ॥ ८७ ॥

1. विसरत्करेणु. 2. नाम नाथः स्यात्. 3. श्रीमन्नितम्बपरा. 4. प्रसाधने.

“ अहो ! सत्यमहो ! धैर्यमहो ! दानमहो ! क्षमा ।
अहो ! शीलमहो ! पुण्यं हरिश्चन्द्रस्य भूपतेः ॥ ”

अहोपदानामन्त्रोक्तिर्बहुधा विस्मये गुणः ।

“ सोऽयं मन्मथसर्वस्वं मन्मनोगृहदेवता ।
लावण्याम्भोधिलहरी दृश्यतां दृश्यतां सखे ॥ ”

हृष्टस्य वाक्यफणितौ द्विरुक्तिरिह भूषणम् ॥ ८८ ॥

“ अस्तु नीरक्षसा पृथ्वी निःशल्यास्तु जगत्त्रयी ।
तिष्ठ तिष्ठ क्षणं संख्ये हन्मि त्वां दशकन्धर ! ॥ ”

क्रुद्धस्य वचनेऽप्यत्र द्विरुक्तिर्नैव दुष्यति ।

‘ देहि देहीति [1]वदते [2]देही देहीति मां वदेत्
[3]देही देहान्तरं प्राप्य पुनर्देहीति नो वदेत् ॥ ”

दैन्येऽपि तद्वदेवात्र पुनरुक्तिर्न दूषणम् ॥ ८९ ॥

“ धन्विनां मृधुवनेषु[4] गच्छता
[5]रूपकोटिकथनेऽधिका क्षतिः ।
खिद्यते किमधिकं प्रयोजना-
देकदानरवधः कृतः कृतः ॥ ”

[6]अत्रावधारणे तद्वत्पुनरुक्तिर्न दूषणम् ।

“ प्रसीद कोपमुन्मुञ्च प्रसीद कलभाषिणि ! ।
तव तन्वि ! पदोपान्ते लुठत्यसमयं प्रियः ॥ ”

उक्तस्यैवात्र कथनं गुण एव प्रसादने ॥ ९० ॥

“ हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥ ”

---

1. कार्ती. 2. देहि. 3. देहि. 4. परेषु. 5. रूपकोपि. 6. अर्थावधारणे.

गुण एवानुकम्पायामत्रापि पुनरुक्तता ।

“ दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्तदद्भुतमिदं तत्रैव चास्तं गतम् ॥ ”

अद्भुते मर्मितमपि वदन्तेत्याद्यदूषणम् ॥ ९१ ॥

“ नेयं निशा दिवस एव भवेत्कथं मे
निद्राऽन्यथा नयनयोर्युगलं न याति ।
नायं शशी तपन एव [1]तनोति ताप-
मुत्पात एव यदि मास्तु विभान्ति ताराः ॥ ”

दिवसत्वरवित्वोक्तिर्विरहे रात्रिचन्द्रयोः ।
सा प्रत्यक्षविरुद्धापि गुणोऽत्र न तु दूषणम् ॥ ९२ ॥

“ मा भवन्तमनलः पवनो वा
वारणो मदकलः परशुर्वा ।
वाहिनीजलभर[2]ः कुलिशं वा
स्वस्ति तेऽस्तु लतया सह वृक्ष ! ॥ ”

प्रसिद्धकारणैर्नैयो नाशयत्वित्यदूषणम् ।

“ चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ ”

दिवा न शोभते चन्द्रः पद्मं नो जृम्भते निशि ॥ ९३ ॥

1. करोति. 2. वरः.

प्रसिद्धत्वादिहानुक्तौ निर्हेतुवचनं गुणः ।
हासस्य यशसः शौक्ल्यं लौहित्यं क्रोधरागयोः ॥ ९४ ॥

ज्योत्स्नापानं चकोराणां कार्ष्ण्यं पापायशोदिवाम्[1] ।
चन्द्रचन्द्रनकर्पूरवनवाततटिस्त्वताम्[2] ॥ ९५ ॥

मुक्ताहारस्रगादीनां दाहकत्त्वं वियोगिषु ।
वेधकत्वं कटाक्षस्य पानं रूपस्य दृष्टिभिः ॥ ९६ ॥

इन्दीवरारविन्दादेः सरिदर्णवयोरपि ।
कुसुमभ्रमराकाण्डधनुर्ज्यांश्च मनोभुवः ॥ ९७ ॥

तच्छराणां मनो लक्ष्यं वसन्तः सुहृदिष्यते ।
एवमादिकृतं काव्येष्वसदेव प्रसिद्धिमत् ॥ ९८ ॥

कर्णावतंसकं शिरःशेखरं कर्णकुण्डलम् ।
सन्निधानादिबोधार्थमेषु कर्णादिकीर्तनम् ॥ ९९ ॥

मुक्तहारपदं त्वन्यरत्नयोगनिवृत्तये ।
आरूढत्वप्रतीत्यर्थं धनुर्ज्यापदमुच्यते ॥ १०० ॥

पुष्पमालेति सुरभिपुष्पनिर्मितताधिये[3] ।
कलभे करिशब्दोक्तिस्तन्मात्रत्वप्रतीतये ॥ १०१ ॥

इत्यादिषु परिज्ञेयं स्थितेष्वेव समर्थनम् ।
आभासो रसभावानां स्वशब्दग्रहणं तथा ॥ १०२ ॥

कष्टकल्पनया [4]व्यक्तिरनुभावविभावयोः ।
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ॥ १०३ ॥

अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः[5] ।
अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः ॥ १०४ ॥

---

1. विषाम्. 2. वनवापीतटिस्त्वताम्. 3. रचितताधिये. 4. व्याप्ति. 5. विस्मृतिः

अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ।
आभासत्वं रसस्य स्यादनौचित्याद्द्विधा यथा ॥ १०५ ॥

" स्तुमः कं वामाक्षि ! क्षणमपि विना यं न रमसे
[1]विलेभे कः प्राणान् [2]रणमखमुखे यं मृगयसे ।
सुलभ्ये ! को जातः शशिमुखि ! यमालिङ्गसि बला-
त्तपः श्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥ "

अनेककामो विषयस्त्वभिलाषोऽप्र[3] लक्ष्यते ।

" दष्टमुक्तमधरोष्टमम्बिका
वेदनाविधुतपाणिपल्लवा[4] ।
शीतलेन निरवापयत् क्षणात्
मौलिचन्द्रशकलेन शूलिनः ॥ "

पित्रोरिवात्र शिवयोर्नार्हं[5] सम्भोगवर्णनम् ॥ १०६ ॥

भावानामनौचित्यादाभासत्वं मतं यथा ।

" राकासुधाकरमुखी तरलायताक्षी
[redacted] [6]स्मेरयौवनतरङ्गितविभ्रमाढ्या ।
तत्किं करोमि [7]विदधे [redacted] मैत्री
[8]तत्स्वीकृतिव्यतिकरे क [9]इवाभ्युपायः ॥ "

अनिच्छन्त्यामिवामुत्र [10]चिन्तनौचित्यगर्हिता ॥ १०७ ॥

रसभावान्तरेष्वेवमाभासत्वमवेक्षताम् ।
दोषो रसानां भावानां स्वशब्दग्रहणाद्यथा ॥ १०८ ॥

---

1. विलोले ; [redacted] लेभे. 2. रणमुखमुखे. 3. विषयस्मृतिभावो. 3. हस्तपल्लवा. 5. नेह. 6. स्मार. 7. [redacted] 8. तत्स्वीकृत. 9. इह. 10. चिन्ताकामिहितागर्हिता.

“ आलोक्य कोमलकपोलतलाभिषिक्त
व्यक्तानुराग[1]सुभगामभिराममूर्तिम्[2] ।
[3]पश्यैष बाल्यमतिवृत्य[4] विवर्तमानः
शृङ्गारसीमनि [5]तरङ्गितमातनोति ॥ ”

अत्र स्वशब्दग्रहणं शृङ्गारेति हि दुष्यति ।

“ सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
[6]सेर्ष्या जह्नुसुतावलोकनविधौ [7]दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी [redacted] शिवायास्तु वः ॥ ”

व्रीडादिभिः पदैर्दोषो ग्रहणं व्यभिचारिणाम् ॥ १०९ ॥

“ सम्प्रहारे[8] प्रहरणैः प्रहाराणां परस्परम् ।
झणत्कारैः श्रुतिगतैरुत्साहस्तस्य[9] कोऽप्यभूत् ॥ ”

उत्साहस्य स्थायिनोऽत्र दोषस्तच्छब्दकीर्तनम् ।

“ परिहरति रतिं मतिं लुनीते
स्खलति भृशं परिवर्तते [redacted] भूयः ।
इति [10]बत ! विषमा दशास्य ! [redacted]
परिभवति प्रसभं [redacted] कुर्मः ॥ ”

[11]रत्यादिपरिहारादेः करुणेऽपि [redacted] सम्भवात् ।
विप्रलम्भेऽनुभावानामस्यात्कष्टकल्पना ॥ ११० ॥

“ प्रसादे वर्तस्व प्रकटय [redacted] सन्त्यज [redacted]
प्रिये ! शुष्यन्त्यङ्गान्यमृतमिव ते [redacted] ।

1. सुलभा. 2. मानरूपाम्. 3. पश्येत्थ. 4. बाल्यमभिभूत्य; बाल्यमविभूत्य. 5. तरां गुणमातनोति; तरङ्गणमातनोति. 6. सेर्ष्या. 7. [redacted] 8. प्रहारैः. 9. तच. [redacted] बत; [redacted] 11. उत्पात.

[1]निदानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे ! प्रत्येतुं प्रभवति गतः कालहरिणः ॥"

शान्तेऽनुभावः कालस्यानित्यत्वपरिकीर्तनम्[2] ।
शृङ्गारे प्रतिकूलं तत् प्रतिकूलग्रहस्त्विह ॥ १११ ॥

दाप्त्यादिरसदोषाणां प्रबन्धविषयत्वतः ।
प्रबन्धेष्वेव लक्ष्याणि ज्ञेयानि रसकोविदैः ॥ ११२ ॥

सर्वदोषरहितं सगुणं यत्
काव्यमव्यययशस्करमुर्व्याम् ।
त्वच्चरित्रमिह साधुनिषेव्यं
गर्वितारिथमगण्डरगण्ड ! ॥ ११३ ॥

इत्यमृतानन्दयोगीन्द्रविरचितेऽलङ्कारसङ्ग्रहे [redacted]
[redacted]: परिच्छेदः ॥

---

1. [redacted] 2. सत्यत्वपरिवर्तनम्. 3. [redacted]

## सप्तमः परिच्छेदः

चतुर्वेदसमुद्भूतं साराभिनयभूषितम् ।
[1]धर्म्यमर्थ्यं यशस्यं न नाट्यं को नाभिनन्दति ॥ १ ॥

न तच्छास्त्रं न सा विद्या न तच्छिल्पं[2] न ताः कलाः ।
नासौ योगो न तज्ज्ञानं[3] नाटके [4]यन्न दृश्यते ॥ २ ॥

जायते यन्न काव्याङ्गमहो ! भारो महान् कवेः ।
[5]अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते ॥ ३ ॥

रूपकं तत्समारोपाद्[6]बहुधात्र रसाश्रयम् ।
वस्तुभेदान्नेतृभेदाद्रसभेदाच्च तत्त्रिधा[7] ॥ ४ ॥

इतिवृत्तं वस्तु चेति कथाया नाम तद्द्विधा ।
तत्राधिकारिकं [8]मुख्यमङ्गं प्रासङ्गिकं विदुः ॥ ५ ॥

प्रख्यातं मिश्रमुत्पाद्यमिति तद्द्विविधं त्रिधा ।
इतिहासादिषु ख्यातं प्रख्यातमिति कीर्त्यते ॥ ६ ॥

उत्पाद्यं कविकल्पं स्यान्मिश्रं तद्द्वयसङ्करात् ।
बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ॥ ७ ॥

अर्थप्रकृतयः पञ्च क्रमेण परिकीर्तिताः ।
स्वल्पमेव समुद्दिष्टं पश्चाद्विस्तार्यनेकधा ॥ ८ ॥

हेतुः कार्यप्रसिद्धौ यस्तद्बीजं बीजवद्यथा ।

" कुमुदिनीपरिभोगकृतागसं
मधुकरं नलिनीं मलयानिलः ।

---

1. धर्यं. 2. न शब्दकीर्तं. 3. तद्दानं. 4. यत्र रस्यते; न तज्ज्ञानं सर्वनाटकमुच्यते
5. तथाविधाकृतिर्नाटय. 6. दाहुःपार्श्व. 7. तद्द्विधा. 8. मुख्यं मार्ग.

नयति सम्प्रति नर्मसुहृज्जनः
कलुषितां रमणीमिव कामुकम् ॥ ”

अवान्तरार्थकथनाद्वस्तुविच्छेदसम्भवे ॥ ९ ॥

तस्याविच्छेदकथनं बिन्दुरित्युच्यते यथा ।

“ कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनायासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ ”

प्रासङ्गिककथै[1]वैषा या दूरमनुवर्तते ॥ १० ॥

सा पताका समाख्याता सुग्रीवचरितं यथा ।
भाविनः प्रस्तुतार्थस्य यदन्योक्त्यैव सूचनम् ॥ ११ ॥

पताकास्थानकं तुल्यं संविधानविशेषणम् ।

“ यतोस्मि [2]पद्मवदने ! समयो ममैष
सुप्ता मयैव भवती प्रतिबोधनीया ।
प्रत्यायनामयमितीव सरोरुहिण्याः
सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥ ”

“ उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥ ”

[3]आद्यं तुल्यात्संविधानाद्द्वितीयं तद्विशेषणात् ॥ १२ ॥

प्रासङ्गिककथैवैकदेशसम्बन्धकीर्तिता ।
प्रकरी नाम सा ज्ञेया जटायुचरितं यथा ॥ १३ ॥

---

1. कथात्पर्य. 2. नवने. 3. एकं तुल्ये.

कार्यं फलं त्रिवर्गं स्यादेकानेकानुबन्धवत्[1] ।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥ १४ ॥

औत्सुक्यमात्रमारम्भः फललाभाय भूयसे[2] ।

" आरम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ
दैवेनेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि
स्वेच्छाचारी भीत एवास्मि भर्तुः ॥ "

तदलाभे प्रयत्नः स्याद्व्यापारस्त्वरया यथा ॥ १५ ॥

राजा—वयस्य ! एक एव मालवेश्वरोऽस्माभिर्यातव्यः । तदुद्धरणाय त्वरितं प्रयतामहे । उपायापायशङ्काभ्यां प्राप्त्याशा सम्भवो यथा ।

राजा—

" मन्त्रनिरुद्धप्रसरोऽप्य[3]सत्कार्यानुरोधेन ।
भिन्नकबरीव सम्प्रति समागमाशा प्रवर्तते शतधा ॥ "

अपायाभावतः प्राप्तिर्नियताप्तिर्मता यथा ॥ १६ ॥

नवमालिका—अंव्व एव्वं ण मन्तव्वम् । णिरयाआर लंघणं उपायदो सम्पादिदम् । इदोपरं मम पिअसहि तुह आंगव्व मन्तव्वम् ।
समग्रफलसम्प्राप्तिः फलयोगो मतो यथा ।

पुरोधाः—

" कलितानि पदानि सप्त साक्षि-
ण्यनले वामुभयोरतोऽस्तु सख्यम् ।
शिवतोरिव शाश्वतैकरस्यं
चरतो यावदशीतदीप्तिमान् ॥ "

आरम्भादिभिरेताभिरवस्थाभिः समन्वितम् ॥ १७ ॥

---

1. देशकालानुबन्धवत्. 2. लब्धा. 3. प्यसत्.

मुखादिसन्धिरूपेण जातं बीजादिपञ्चकम् ।
अवान्तरार्थसम्बन्धः [1]सन्धिरेकान्वये सति ॥ १८ ॥

मुखं प्रतिमुखं चैव गर्भश्च तदनन्तरम् ।
विमर्शोऽन्ते निर्वहणमित्यमी पञ्चसन्धयः ॥ १९ ॥

मुखं बीजसमुत्पत्तिर्नानार्थरससंभवा ।
अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ॥ २० ॥

उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥ २१ ॥

उद्भेदभेदकरणान्यन्वर्थान्यथ लक्षणम् ।
उपक्षेपस्तु बीजेन वस्तुनो योजनं यथा ॥ २२ ॥

" राजा—

[2]तव सा कुवलयेक्षणा मया
वीक्षितोपवनभूविहारिणी ।
शम्बरारिशरदेवतेव[3] मे
मानसं तुदति मत्तकाशिनी ॥

वयस्य ! किं तत्र व्रजामः ? "
बहुलीकरणं तस्य युक्त्या परिकरो यथा ।

" सौरभ :— वयस्य ! न केवलं त्वदीयमेव हृदयं सा समाकर्षति, अपितु—

" अव्याजमुग्धमधुरैररविन्दकोण—
निर्यन्मधुव्रतनिकायनिभैः कटाक्षैः ।
भावावतारपिशुनैरपि भो वयस्य !
बाला भवन्तमकरोदपदेशलक्ष्यम्[4] ॥ "

परिन्यासस्तु कार्यस्य निष्पन्नप्रायता यथा ॥ २३ ॥

1. सन्धे. 2. कुत्र Ad. 3. देवतेति मे T2; परदेवतेव T. 4. लक्ष्मीम् T

" कैरवः—वयस्य ! यदि मामुद्दिश्य प्रेषयति, तर्हि—

मदनस्य मया राज्यं प्राज्यं बलवता हृतम् ।
पुण्यैः पुरातनैरद्य प्रायेण फलितं मम ॥ "

विलोभनं [1]गुणाख्यानं मानसोल्लासकृद्यथा ।

" कैरवः-- वयस्य ! कोपं तु नैवम् । यतः,

बालातपक्रान्तपयोजपत्र-
मिले तु नेत्रे मिषतो न भीमे ।
आकर्णकृष्टाङ्गजचापयष्टिः
भुग्ने भ्रुवौ न भ्रुकुटिस्तयोस्तु ॥ "

[2]सम्प्रधारणमर्थानां युक्तिरित्युच्यते यथा ॥ २४ ॥

" वन्दी—देव, सत्यमेतत् ।

नृत्ताचार्यो मम सुहृदभूदत्र[3] कन्दर्पदासः
तेनावश्यं पितुरभिनवं [4]नृत्तमादर्शयन्ती[5] ।
बध्वा पत्रं सलिपि नगरद्वारि तेनानुशिष्ट-
स्तुष्टेनाऽहं दुहितृभवने चित्रकृत्येऽलिखं त्वाम् ॥ "

या चित्तस्य सुखप्राप्तिः सा प्राप्तिर्गीयते यथा ।

" राजा—( स्वगतम् )

आलोच्य[6] वाक्यं स्वयमन्तरात्मा
हृष्टः परानन्दमिव प्रविष्टः ।
प्रायेण भावीनि भवन्ति वस्तू-
न्यालोच्यमानानि मनोहराणि ॥ "

---

1. गुणाख्यानान्मनसो; च तत्प्रोक्तं Ad. 2. सम्प्रसारण. 3. भूत्तश्र Ad. 4. नृत्य. 5. येति Ad. 6. अलोक्य U; G3. Ad.

बीजागमः [1]समाधानमिति सङ्कीर्त्यते यथा ॥ २५ ॥

"राजा—(अपवार्य) वयस्य! वयं निलीना एव निवसामः।
अनुरागमङ्गनाया मुखेन यः श्रोत्रपेयमाधुर्यम्।
आकर्णयत्यजस्रं स एव मदनस्य शास्ति[2] साम्राज्यम्॥"

सुखदुःखकरं यत्स्याद्विधानं तद्विदुर्यथा।

"कैरवः— पुरस्तादवलोकय तस्यास्ताम्बूलकरङ्कवाहिनीम्।
आज्ञेव शम्बररिपोरवलङ्घनीया
वाञ्छेव विग्रहवती वशगा दृशोर्मे।
अन्यार्थमेव किमुतापणमभ्युपैति
सन्देशमानयति सा किमु सारसाक्ष्याः॥
अतो मे मनसि मोदखेदौ[3] वर्तेते।"

अद्भुतापादनं यत्स्यात्परिभावो मतो यथा ॥ २६ ॥

"कैरवः— वयस्य! पश्य.
[4]रङ्गोत्थिता रतिपतेरिह[5] राज्यलक्ष्मी-
र्नारीललाम नयनोत्करपूर्वपुण्यम्।
आलिङ्गितुं मलयमारुतमञ्जसा [6]सा
वाञ्छत्यहो! सुभगताऽस्य तु वागतीता॥"

गूढार्थभेदनं यत्स्यादुद्भेदः प्रोच्यते यथा।

विदूषकः—[7]वअस्स, विसुमरिदं तुए। जं ताए एव्व अहंपि सरिसं एव्व पेक्खामित्ति भणिदं।
(वयस्य, विस्मृतं त्वया। यत्तयैवाहमपि सदृशमेव पश्यामीति भणितम्)

1. समादान. 2. U omits शास्ति Ad. 3. मोदजडौ Al Ad. 4. रागोत्थिता Ad. 5. रिवAd. 6. मञ्जसासौ Ad. 7. as adapted from Ad; विसुमरिदं तुए। जेत्ता एवा हिं पि सरिसं एव्व पच्छामिति भणिदम् T.

" राजा—सखे ! तदिदानीं संस्मृतम्[1] । "

प्रारब्धकार्यसिध्यर्थं भेदः प्रोत्साहना यथा ॥ २७ ॥

" सौरभः—[2]कलिके ! त्वमग्रतो गच्छ । मार्गं दर्शय । "

उद्दिष्टार्थस्य सिध्यर्थं प्रारम्भः करणं यथा ।

" राजा—शुद्धपार्ष्णिना हि जेतव्या रिपवः । [3]अतो गौडेशमुन्मूल्य[4] मालवेश-मभियास्यामः ।

बन्दी—देव !

अकृते तु घनावरोधभेदे
सति सायन्तनमारुतेन ते न ।
अवलोकयितुं सुखेन शक्या
शशिरेखा [5]शमिताखिलाभितापा ॥ "

उपक्षेपः परिकरः परिन्यासस्तथैव च ॥ २८ ॥

युक्त्युद्भेदौ समाधानं मुखे वाच्यान्यवश्यतः ।
लक्ष्यालक्ष्य इवोद्भेदः तस्य प्रतिमुखं भवेत ॥ २९ ॥

बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश ।
विलासः परिसर्पश्च विधूतं शमनर्मणी ॥ ३० ॥

नर्मद्युतिः प्रगमनं निरोधः[6] पर्युपासनम् ।
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥ ३१ ॥

रत्युद्देशेन या काङ्क्षा विलासः स मतो यथा ।

" राजा—( विहस्य ) वयस्य !

विदितरसो विभवयुतो युवा यदि स्यात्सचेतनः सदृशीम् ।
कः खलु कामयमानां कान्तामप्राप्य कातरो न भवेत् ॥ "

---

1. संस्कृतम. 2. कौशिक. 3. ततो Ad. 4. as adapted from Ad. मुन्मील्य T. 5. शमिताभिलाषितापा. 6. विरोधः.

दृष्टनष्टानुसर्पः स्यात्परिसर्पो मतो यथा ॥ ३२ ॥

" राजा—( ससंभ्रमम् ) वयस्य! त्वद्वचनचातुरीविस्मृतविषयान्तरो [1]गम्यमानमपि पन्थानं न गणयामि । क्वाऽसौ नगरी ? (इत्युपसर्पति) "

अरतिर्मनसो या स्याद्विधूतं कथ्यते यथा ।

" राजा—( निर्वर्ण्य सानन्दं ) वयस्य ! समाकर्णय ।

दूराद्दर्शनवाञ्छा सविधगतायां समागमोत्कण्ठा ।
अप्राप्तायामधुना कथमिव मनसो रतिस्तस्याम् ॥ "

तस्यास्तु शान्तिररतेः शम इत्युच्यते यथा ॥ ३३ ॥

" राजा—( निर्वर्ण्य सानन्दं ) वयस्य ! मम हि—

दृढविरहविदाहमेष[2] दृष्टो
हरति चरो दयिता सखीसमेतः ।
शशधर इव चन्द्रिकासनाथो
निशि जगतो नितरां निदाघतापम् ॥ "

परिहासकरं[3] वाक्यं कथ्यते नर्म तद्यथा ।

" विदूषकः—[4]'वअस्य ! इह एव्व रमणिज्जा वट्ठिदा तुह पिआ होदु ।
( वयस्य । इहैव रमणीयोपस्थिता तव प्रिया भवतु )

राजा—(विहस्य) वयस्य ! अधमवृत्तिमवलम्बसे[5] । "

[6]द्युतिर्नर्मसमुद्भूता नर्मद्युतिरसौ यथा ॥ ३४ ॥

" कः खलु धीरोदारो[7] गभीरसलिलां पिपासुरपि गङ्गाम्[8] ।

---

1. अवगम्यमानमपि V. Ad. 2. विधाहमेव; विदाहमेव. 3. कृतं; समं; कृतं Ad. 4. [redacted] adapted from Ad. 5. फलमवलम्बसे Ad. 6. धृति. 7. धीरोदारां. 8. गन्ता.

दूरादपि [1]नासीदेदारादपि सारिणीं समुलङ्घ्य ॥ ”

उत्तरादुत्तरं वाक्यं प्रगमः कथ्यते यथा ।

“ मङ्गलवती—

वत्से ! वारं वारं वचनानि मयाऽद्य वर्णितानि तव ।
विगलन्ति कर्णविवराद्भ्माद्भाण्डादिवाऽऽशु सलिलानि ॥ ”

कौमुदी—

“ [2]माए मह प्परूडो दुव्वारदमो ण होदि किं मअणो ।
पज्जलदि किं ण पुण्णो अग्गि ज्जवालेव्व विअण पवेण हिं ॥
( मातर्मम प्ररूढो दुर्वारतमो न भवति किं मदनः ।
प्रज्वलति किं न पुर्णोऽग्निज्ज्वाल एव व्यजनपवनैः ॥ )

निरोधनं हितार्थस्य निरोधः कथ्यते यथा ॥ ३५ ॥

“ राजा—धिङ्मूर्ख !

“ प्राप्ता [3]कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा ।
[4]रत्नावलीव कान्ता मम हस्ताद् भ्रंशिता भवता ॥ ”

पर्युपासनमुक्तं स्यात्क्रुद्धस्यानुनयो यथा ।

राजा—[5]अयि कोपने !

---

1. नासेद. 2. as adapted from Ad. a) माए महप्पहावो वारिदिबामो णेहोदि कि मअण । पज्जल दिणवरण उणो अग्गिनिज्झा हवियणपवणे हि ॥T.

b) मए तुहप्पहावो वारिदवाहोदि कि मअणो । जप्पलबिन वरणवणो अग्गि अजालावियाणपवणहि ॥T1

The original Mss. read this passage thus :

माए मह प्पणिबो वारिदिदमो ण होदि कि मअणो । पज्जलदि ण पुण्णो अग्घिविज्जाइ विअणपवणेहि । Ad. fn.

3. कथमपनीतैव. 4. मुक्तावलोव. 5. omit in Ad. कोपनशीले.

" अपराधमिमं क्षमस्व सख्या-
श्चरणौ ते मदपेक्षया गृहाण ।
अरुणप्रभयावलीढपद्मां
नलिनीं ह्याशु नयेद्विकासमर्कः ॥ "

उक्ताद्विशेषवद्वाक्यं पुष्पं सङ्कीर्त्यते यथा ॥ ३६ ॥

"विदूषकः—[1]भो वअस्स, सव्वथा एसो मुक्ताहारो जवकालजोग्गा अक्खमालाहोदु।
( भो वयस्य, सर्वथा एष मुक्ताहारो जपकालयोग्या अक्षमाला भवतु)

राजा—वयस्य ! सत्यमेतत् । अन्यच्च—

[2]आसित्वा विजने विमुक्तविषयासङ्गं मनो निश्चलं
कृत्वा हृज्जलजान्तरे प्रियतमारूपं परं दैवतम् ।
ध्यात्वा हारलतामयाक्षवलयं हस्तेन धृत्वा मया
तत्सायुज्यफलाप्तये प्रतिदिनं तन्नाम सञ्जप्यते ॥ "

प्रत्यक्षनिष्ठुरं वाक्यं वज्रमित्युच्यते यथा ।
" विदूषकः— [3]भो वअस्स ! [4]अह्म एदं खु दुक्करं।
( भो ! वयस्य ! अस्माकमिदं खलु दुष्करम् )

राजा—आः ! अत्यन्तनिष्ठुरमेतद्वाक्यम् ।
विषमिव मनसो मे [5]मोहनमशनिरिव नितन्तनिष्ठुरं श्रवसोः।
प्राणप्रयाण[6]भेरीभाङ्कारः प्रणयजलधिवडवाग्निः ॥ "

उपन्यासः प्रसादोक्तिरुपायेनोच्यते यथा ॥ ३७ ॥

" मङ्गलवती—

1. as adapted from Ad. T. reads भो वअस्स एस वो साधोर मुत्ताहारो जवमाशां जागो अञ्जमि अंवकजहोदु. b) भो वअस्स ! एस्र साधोरमुत्ताहारो जमोलजोग्गो अखभि अरल ओपेरादु T2. 2. आसित्वालिजने. 3. as adapted from Ad. 4. अम्माणं एदं कज्जं दग्धं । जं दु घृतं,T; हमाणं एकं कज्जं घट्ठ T2. 5. adapted from Ad. मोहनामित्यशनिरिव T. 6. भल्ली.

[1]सर्वथेयं समासक्ता तस्मिन् [2]तामरसेक्षणे ।
भव प्रसन्ना भद्रे ! त्वं तेन दोषो[3] न ते परम् ॥ ”

चातुर्वर्ण्योपगमनं वर्णसंहरणं यथा ।

“ कौमुदी—एदं ण सुदं तुए ।
[4]साव्वाणं सहि वण्णाणं बह्मणो पअमो गुरू ।
आराहणिज्जो अण्णेहिं वण्णेहिं जेण वण्णिदो ॥

( एतन्न श्रुतं त्वया ?
सर्वेषां सखि ! वर्णानां ब्रह्मणः प्रथमो गुरुः ।
आराधनीयो ऽन्यैर्वर्णैर्येन वर्णितः ॥ )
प्रगमः परिसर्पश्चोपन्यासो वज्रमेव च ॥ ३८ ॥

पुष्पं च[5] नियमाद्वाच्यान्यन्यानि तु यथा रुचि ।
गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ॥ ३९ ॥

भवेन्न[6] तु पताकात प्राप्त्याशा नियमाद्भवेत ।
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥ ४० ॥

सङ्ग्रहश्चानुमानं च तोटकाधिबले तथा ।
उद्वेगः[7] सम्भ्रमाक्षेपावङ्गानि द्वादशाऽस्य तु ॥ ४१ ॥
छद्मकर्म समाख्यातमभूताहरणं यथा ।

“ सोरभ :— [8]आर्ये ! किमुच्यते ? छद्मनानुप्रविश्य साधयामोऽभिलषितम् । ”
तत्त्वार्थकथनं यत्तन्मार्ग इत्युच्यते यथा ॥ ४२ ॥

“ मङ्गलवती—ननु सौरभ !
कपटमिव कायवन्तं क इव विटच्छद्मना खिलामेनाम् ।

---

1. सर्वदेयं. 2. adapted from Ad. तामरसेक्षणा T. 3. रोषो. Ad. also T2. 4. adapted from Ad; असंवारणं स ह वण्णाण ओ मणो पढनगुण। भाराहिणीज्जो अंणेहिं वण्णेहि जणवण ॥ T. 5. तु. 6. भवेन्महापताकात्र. 7. उद्योगः. 8. आर्यं.

[1]अलमतिसन्धानमतस्तत्त्वं कथयामि [2]तावतोऽर्थस्य ॥ ”

सवितर्कं तु यद्वाक्यं रूपं तत्कथ्यते यथा ।

“ राजा—वयस्य ।

नेयं निशा दिवस एव भवेत् कथं मे
निद्राऽन्यथा नयनयोर्युगलं न याति ।
नायं शशी तपन एव तनोति ताप-
मुत्पात एव यदि मास्तु विभान्ति ताराः ॥ ”

यदुत्कर्षकरं वाक्यं तदुदाहरणं यथा ॥ ४३ ॥

“ राजा—( मलयमारुतं चोद्दिश्य )

मन्दोऽसि मलयमारुत ! कथमिव निश्वासभारैस्तस्याः ।
स्पर्धां करोषि मे त्वं विषायसे तेऽधुना सुधायन्ते ॥ ”

क्रमः सञ्चिन्त्यमानाप्तिर्ज्ञानं भावस्य वा यथा ।

“ राजा—( इति वदन्नेव नेत्रे निमीलयति )

विदूषकः—णोमालिए ! एसो वअस्सो [3]णिमीलिअणअणो
संकप्पसमाअमसुखं अणुहादि ।
( नवमालिके ! एष वयस्यो निमीलितनयनः
संकल्पसमागमसुखमनुभवति । )

यौक्तिकपिधानं च सङ्गः कथ्यते यथा ॥ ४४ ॥

“ सौरभः—

अर्थैरनेकैर्जननीममुष्या-
श्चित्तं च दत्त्वा चिरकालचिन्त्यम्[4] ।

1. सन्धातुमद. 2. तावता. 3. as adapted from Ad. णिमीलिअ उण-भणो सकंपसमागमहं अणुहेमु T. णिमिलथ रोयणो सक्काप्प समाअमसुहं अणुहव ६. (गलसिगि मालिदला अणा संक्कप समाअमथुयां अणुहदि व सा) T2. 4. मृग्यम् also in Ad.

सन्तोषयेयं सहसैव भद्रे !
　　न चेत्कथं स्यादिह नः प्रवेशः ॥ ''

[1]लिङ्गलिङ्गिपरिज्ञानमनुमानं मतं यथा ।

" मङ्गलवती—
कारणं ज्ञायते कार्याद्धूमाद्धूमध्वजो यथा ।
अस्ति चेदर्थसम्पत्तिरचिरादवलोक्यते ॥ ''

समरम्भं तु यद्वाक्यं तोटकं कथ्यते यथा ॥ ४५ ॥

" मकरदंष्ट्रा— (ससंभ्रमं) [2]जुत्तं पि सच्चं भणसि । जुज्जदि खु,
चोरो मज्झ करादो हारलदं हंत संभमेण हरंतो ।
पहरइ पासाणेहिं पेच्छसि तुमपि किमेत्थ पडिकादव्वां ॥

(युक्तमपि सत्यं भणसि ! युज्यते खलु-
चोरो मम करात् हारलतां हन्त सम्भ्रमेण हरन् ।
प्रहरति पाषाणैःपश्यसि त्वमपि किमत्र प्रतिकर्तव्यम् '')

वाक्यं यत्सातिसन्धानं कथ्यतेऽधिबलं यथा ।

" सौरभः—( स्वगतम् ) अस्तु नाम तथापि [3]अभ्युपदत्त[4]पदार्थबलादेवैनामतिसन्धाय साधयामि कार्यम् !

शत्रुभिर्या कृता भीतिरुद्वेगः कथ्यते यथा ॥ ४६ ॥

मकरदंष्ट्रा— ता [5]राअपुत्तस्स पुण्णमुत्तिणो किअमाणदुसे दुवेवि दुब्बम्भणे दाणि एव्व मारेमि ।

( तत राजपुत्रस्य पुण्यमूर्तेः क्रियमाणद्वेषौ द्वावपि दुर्ब्राह्मणाविदानीमेव मारयामि । )

1. लिङ्गाल्लिङ्गि in Ad. अनुमानं तु तद्यथा U; G3; S. Ad. 2. as adapted from Ad. जुज्जदि खुचोरो मज्झकरा देहागलदं हन्त सम्भमेण हरन्तो पहरई पासाणे हिं पेचासि किं एअ अवधि कादव्वम् T. 3. अच्युतदत्त Ad. 4. रसार्थं; फलार्थं. 5. [illegible] adapted from Ad. तं राअपुत्तसपुण्णमुतिणो कहे कुणदुवे विदुब्बम्मणदाणि एव्व मारेमि (Sic) T.

शङ्कात्रासौ यत्र वाक्ये सम्भ्रमः कथ्यते यथा ।

"सौरभः— (सशङ्कं सत्रासं च स्वगतम्) किमेषा पूर्ववदेव कारयिष्यति।"

गर्भबीजसमाक्षेपादाक्षेपः कथ्यते यथा ॥ ४७ ॥

"सौरभः—

प्रसादं तव सम्प्राप्य साधनीयं समीहितम् ।
विभावरीं विना मैत्र्या [1]चकोरेण न चन्द्रिका ॥"

अभूताहरणं मार्गस्तोटकाधिबले अपि ।
आक्षेपश्चात्र नियमाद्वाच्यान्यन्यान्यपीच्छया ॥ ४८ ॥

क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् ।
गर्भनिर्भिन्नबीजार्थः [2]सोऽवमर्शो ऽवमर्शनात् ॥ ४९ ॥

[3]तत्रापवादसम्फेटौ विद्रवद्रवशक्तयः ।
द्युतिः प्रसङ्गश्छलनं व्यवसायो विरोधनम् ॥ ५० ॥

प्ररोचना विचलनमादानं च त्रयोदश ।
दोषप्रख्यापनं यत्स्यादपवादो मतो यथा ॥ ५१ ॥

"कैरवः—

पापे पुरा पातयितुं प्रवृत्ता
सन्तानकं स्वल्पफलाय तर्हि ।
यागैरनेकैर्यमिभिर्वरेण्यो
लोकः कथं लोचनगोचरस्ते ॥"

रोषेण भाषणं यत्स्यात्सम्फेटोऽभिमतो यथा ।

"मकरदंष्ट्रा—

---

1. as adapted from Ad. चकोरेणेव T. 2. as adapted from Ad. सोवमर्शो विमर्शनात् (Sic) T. 3. अत्रा Ad.

पत्ता सुधा वारविलासिणी ए
माआभअंगेण न मारिदेत्ति ।
क्रा केदई कामिअफुल्लपुप्फा
कत्ता पुरा कण्डइणी विसेण ॥ "

( [1]प्राप्ता सुधा वारविलासिन्या
माया भुजङ्गेन न मारितेति ।
सा केतकी कामितफुल्लपुष्पा
क्लृप्ता पुरा कण्टकिनी विषेण ॥ )

कैरवः—धूर्ते ! नाद्यापि रोषं मुञ्चसि ।
वधबन्धादिकथनं विद्रवः कथ्यते यथा ॥ ५२ ॥

कैरवः—

" बद्धः पश्चाद्वलिभिरवनीपालभृत्यैर्नियोगा-
दस्याः क्रूरैर्यमपरिसरं प्रापणीयो[2] यथासम् ।
सा त्वं [3]दोषं मयि वितनुषे[4] साम्प्रतं सांप्रतं ते
सर्पिः क्षीरं विषमिव खले साधयेत्साधु [6]तेन ॥ "

द्रवो गुरुतिरस्कारकथनं कथ्यते यथा ।

" लवः—

[7]वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्धतां[7]
सुन्दस्त्रीदमनेऽप्य[8]खण्डयशसो लोके महान्तो हि ते ।
यानि त्रीण्यकुतोमुखान्यपि पदान्यासन् [9]खरायोधने

---

1. as adapted from Ad. 2. as adapted from Ad. उपधानम् T. 3. रोषम् Ad. 4. वितनुषी. 5. as adapted from Ad. तैनः (Sic) T. 6. वन्धा. 7. वर्तते Ad. वर्तते इत्यव्ययं दोषसंवरणार्थो इति नारायणीयव्याख्या। तेष्वपि वृद्धेषु संवरणीयो दोषगणो वर्तत एवेति शब्दार्थः as explained by the Ed. in fn. Ad. वर्धते 8. त्यकुण्ठं. 9. बतायोधने.

किं वा[1] कौशलमिन्द्रसूनुनिधने[2] तत्राप्यभिज्ञो जनः[3] ॥ "

शक्तिः सङ्कीर्त्यते सा यद्विरोधशमनं यथा ॥ ५३ ॥

" राजा—वयस्य !

विसृज मनसि रोषं मा विरुद्धं वचो मे
तव भवतु निजानामेव कोपप्रसादौ ।
खरतररविरश्मिव्रातपातेऽपि सद्यः
सरसिजनिकुरम्बं [4]स्वैरमुन्मेषमेति ॥ "

तर्जनोद्वेजने यत्र सा द्युतिः कीर्त्यते यथा ।

" कैरवः—

या त्वं दूती यमस्येव तदा [5]तर्जितवत्यपि[6] ।
सैव सम्प्रति सोद्वेगा चपले ! चारु[7] भाषसे ॥ "

कीर्तनं गुरुनाम्नो यत्प्रसङ्गः कथ्यते यथा ॥ ५४ ॥

" मकरदंष्ट्रा—

[8]जादो जलधिझरादो कासारादो विणिक्कन्तं ।
सुमरदि णागो हिअए किं पंकालित्तकामरं जादु ॥

( जातो जलधिझरात् कासाराद्विनिष्क्रान्तम् ।
स्मरति नागो हृदये किं पङ्कालिप्तकासरं जातु ॥ )

यत्रावमाननं वाक्ये छलनं तन्मतं यथा ।

बन्दी—देव !

1. यद्वा Ad. also T2. 2. also U.S, Ad; हनने Ad. also T2. 3. also Ad. मन:T2. 4. as adapted from Ad. खैर T. 5. as adapted from Ad वर्जित T. 6. सि. (Sic) T. 7. also G3 Ad. चाटु Ad. 8. as adapted from Ad. उद्गीतिरियम् as noted by Ed. Ad. (fn.) T. reads the passage vaugely.

"कोऽयं ते प्रतिकर्तुमत्र[1] भवतश्चेलान्तबद्धाक्षतो
भूयः स्वस्ति वदन्नटत्यनुगृहं दूर्वार्पणाताञ्जलिः ।
किं कर्णाटमहीपतिः ! किमु महाराष्ट्रः ! किमङ्गाधिपः !
किं पाण्ड्यः! किमु घूर्जरः! किममुना सर्वेऽपि ते सेवकाः ॥"

स्वसामर्थ्यस्य कथनं व्यवसायो मतो यथा ॥ ५५ ॥

"कैरवः—

जडं जलनिधेर्वारि मुक्त्वा मुनिनिराकृतम् ।
मम स्वान्ते मधुध्वंसी नित्यं शेते निरामये ॥

अतोऽखिलजग[2]त्स्वहमेवातुलप्रभावः"

विरोधनं स्वशक्त्युक्तिः संरब्धानां मतं यथा ।

"अर्जुनः— आर्य ! प्रसीद । किमत्र क्रोधेन ?
अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य[3] का व्यथा ॥"

भीमः—[4]अरे, भरतकुलेन्दुकलङ्क !
अद्यैव किं न [5]विसृजेयमहं भवन्तं
दुःशासनानुगमनाय कटुप्रलापिन् !
विघ्नं [6]गुरुर्न कुरुते यदि मद्गदाग्र-
निर्भिद्यमानरणितास्थनि ते शरीरे ॥

अन्यच्च रे मूढ !
"[7]शोकं स्त्रीवन्नयनसलिलैर्यत्परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविघटने यच्च साक्षीकृतोऽसि ।

1. कर्तुरत्र. 2. as adapted from Ad. गत्सु लब्ध प्रवातु T. (Sic) 3. रत्र Ad, रस्य का कथा U; Ad. 4. as adapted from Ad. अये T 5. [redacted] adapted from Ad. विशसे T. 6. गुरू न कुरुतो Ad. 7. as adapted from Ad. शोकैः T.

आसीदेतत्तव कुरुपते ! कारणं जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥

[1]राजा— दुरात्मन् ! भरतकुलापशद ! पाण्डवपशो ! नाहं भवानिव विकत्थनाप्रगल्भः । किंतु,

द्रक्ष्यन्ति न चिरात्सुप्तं बान्धवास्त्वां [2]रणाङ्गणे ।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभीमभूषणम् ॥ "

प्ररोचना सिद्धवद्भाव्यर्थकथनं यथा ॥ ५६ ॥

" वन्दी — देव !

आस्ते द्वारि वधूर्विधातृरचनावैदुग्ध्यविक्रान्ति[3]भू-
भूरेतस्य बलादहारि भवता भीता नतारातिना ।
किं नामापरमत्र कार्यमधुना साध्यं समाशास्यते
[4]तत्पाणिग्रहमङ्गलाय मनुजाधीशास्तु यत्नो महान् ॥ "

विकत्थनाद्विचलनमामनन्ति बुधा यथा ।

" कैरवः—

ननु तव नयहीने नापराधं स्मरेयं
मनसि विसृज भीतिं मत्क्रुधो[5] नाऽसि पात्रम् ।
भुवनमखिलमेको भ्रामयेत्र भ्रुवाऽहं
नियमयितुमधीशो[6] नीरजाक्षप्रभावात् ॥ "

कार्यस्य सङ्ग्रहो यत्स्यात्तदादानं मतं यथा ॥ ५७ ॥

" कैरवः— (स्वगतम्) अस्तु नामैतां[7] कुट्टिनीं देवकुलाग्रस्थापितदीपस्तम्भोपरि निधाय गमिष्यामि "

1. दुर्योधनः Ad. 2. रणाजिरे Ad. 3. वैदग्ध्यविश्रान्ति Ad. 4. adapted as in Ad. तत्पाद T 5. क्रुधां S Ad. 6. मयीशः S Ad. 7. नामैनां Ad

व्यवसायादानशक्तित्रयमावश्यकं त्विह ।
बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ॥ ५८ ॥

एकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ।
सन्धिर्विरोधो ग्रथनं निर्णयः परिभाषणम्[1] ॥ ५९ ॥

प्रसादानन्दसमया [2]कृतिर्भाषोपगुम्भने ।
[3]पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ॥ ६० ॥

मुखसूचितबीजार्थप्राप्तिः सन्धिर्मता यथा ।

" कैरवः—

आदावघटितं कार्यं मध्ये सुघटितं मम ।
भूयो विघटितं भूयो भूयाद्घटयितुं प्रभुः ॥ "

मार्गणं तस्य कार्यस्य विरोधः कथ्यते यथा ॥ ६१ ॥

" सौरभः—

सा त्वयैवमवमानिता सती
 कुट्टिनी कुपितपन्नगीनिभा ।
मारयेत्किमु महीशतर्जिता[4]
 मानयेत्किमुत मन्दविग्रहा ॥ "

ग्रथनं तस्य कार्यस्य तूपक्षेपो मतो यथा ।

" कैरवः— वयस्य ! नात्र सन्देहः ।

शान्तिमेति सकलोऽपि भूभुजां
 सन्निधौ सहजवैरितर्जितः ।

1. भावनम् S.Ad. 2. धृति Ad. 3. [illegible] adapted from Ad भागोप T. 4. वर्शिता also Ad.

तामसा अपि तरक्षवो मृगैः
सञ्चरन्ति हि समं तपोवने ॥ ''

अनुभूतार्थकथनं निर्णयोऽभिहितो[1] यथा ॥ ६२ ॥

'' सौरभः— वयस्य ! मैवं मन्तव्यम् ।
स देवतावेश्मनि सत्यसङ्गरः
सतां समक्षं समुदीरितं तथा ।
वचः स्वकीयं वसुधेश्वरः कथं
मुहूर्तमात्रेण मृषा करिष्यति ॥ ''

अन्योन्यपरिवादोऽयं[2] परिभाषाऽत्र सा यथा ।

'' मकरदंष्ट्रा— (सरोषं) [3]अले दुब्बह्मण ! पहववेदिणो पुरदो एव्वं पुणो वि विभणसि ।

( अरे दुर्ब्राह्मण ! प्रभववेदिनः पुरतः पुनरप्येवं भणसि । )

सौरभः—
धूर्ते ! दुरन्तविपदर्णवमध्यमग्नौ
दीनाववेक्ष्य कृपया दिननाथवंश्यः ।
[4]आवामपारमनयन्नयनात्तदीयात्
[5]ज्ञातौ जहाति न कदाऽपि सुतौ नरेन्द्रः ॥
अतस्ते तर्जनान्नाभिभवः[6] । ''

प्रसीदेत्याद्यनुनयः प्रसादोऽभिमतो यथा ॥ ६३ ॥

'' [7]मदसारः—(किंचिद्विहस्य) भो ! क्षमस्व ममापराधम् । ''

वाञ्छितार्थस्य या प्राप्तिरानन्दः स मतो यथा ।

1. also S Ad, भिमतो यथा Ad. 2. परिभावो S Ad. परिवादो यः Ad. 3. as adopted from Ad; अरे दुब्बम्मण! पुहविवदीणां वि पुरदो एव्वं पुणो विभणसि T. 4. आवामवारं S. Ad. 5. जातौ T1. 6. तर्जनान्न बिभीवः Ad. 7. रुतसारः Ad. मतसारः S.Ad.

" पुरोधाः—राज्ञः करेण रमण्याः करं ग्राहयति

राजा—( सहर्षं गृह्णाति ) "

चिरारूढस्य दुःखस्य निर्गमः समयो यथा ॥ ३४ ॥

" राजा— ([1]तरुणीं कथमपि कटाक्षेण निर्वर्ण्य)

(अपवार्य) वयस्य !

" सामिफुल्लसरसीरुहनिर्य-
[2]द्भृङ्गसन्ततिसमाननिकायाः ।
अञ्जनाविमलबाष्पलवा मे
क्षालयन्ति चिरखेदममुष्याः ॥ "

[3]स्थिरीकरणमर्थस्य लब्धस्य तु [4]कृतिर्यथा ।

" पुरोधाः— ततः सप्तपदान्याक्रामय्य

कलितानि पदानि सप्त साक्षी-
ण्यनले वामुभयोरतोऽस्तु सख्यम् ।
शिवयोरिव शाश्वतैकरूपं
चरतो यावदशीतशीतभानू ॥ "

[5]मानार्थकामालंभो हि भाषणं कथितं यथा ॥ ६५ ॥

" कैरवः—

[6]तवात्मजा तामरसायताक्षी
मह्यं [7]स सम्मानमियं[8] करोति[9] ।
दत्ता दयावारिधिना त्वया त-
द्रूपदेशाद्दुर्लमत्त्वमुक्तम्[10] ॥ "

1. omit. Ad. added before S.Ad. 2. न्मत्तषट्पद T1. 3. स्थिती. T1. 4. धृति Ad. 5. मानार्थकामादिलाभो Ad. 6. as adopted from Ad. तदात्मजा T. 7. न T1. 8. मिमं.T1 9. महीश:T1 also Ad. 10. दुरुयत्सदुक्तम् T1.

उपगुम्भनमाश्चर्यप्राप्तिरित्युच्यते यथा ।

"पुरोधाः—(साश्चर्यम्) [1]मनोरथसिद्ध ! ममाप्येतदेव विवक्षितम् । अहो ! दैवादावयोर्मतिसंवादः ।"

कार्यस्य दर्शनं पूर्वभावः सङ्कीर्त्यते यथा ॥ ६६ ॥

"मनोरथसिद्धः — अन्य[2]च्च ममाशास्यमस्ति । [3]तदिदं - मालवनाथः सम्भावनीयः । यथा प्रीयते देवी ।

सर्वः स्वजनसम्मानात्सन्तोषमुपयाति हि ।
यतो वकुलसेकेन विकसेन्मुकुलावली ॥"

स स्यात्कार्यस्य संहारः प्रिय[4]ः प्रियतरो यथा ।

"पुरोधाः—

पुण्यैस्तस्य पुरातनैः क्षितिपतेः प्रख्यात[5]वत्सान्वयः
क्षीराम्भोनिधिचन्द्रमाः सकलभूलोकाभिनन्द्योदयः[6] ।
स्वैरं [7]खर्वितपूर्वराजचरितै[8]ः पूतैर्निजैर्वर्तनैः
जामाताऽसि जनाधिनाथ ! विदिशां हंसावलीं चामुयाः ॥"

प्रशस्तिः प्रोच्यते सा तु यच्छुभाशंसनं यथा ॥ ६७ ॥

"साहित्यभानुरयतामुदयं नृपाणां
कीर्त्यम्बुजानि विकसन्तु[9] सितानि सन्तु ।
नाशं प्रयातु घनदुर्जनवाक्तमिस्रं
भूरस्तु सन्ततमहोत्सवशालिनीयम् ॥"

अङ्गान्यवश्यमेतानि वाच्यानीह चतुर्दश ।
उक्ताङ्गानां चतुष्षष्टेः षोढा चैषां प्रयोजनम् ॥ ६८ ॥

1. as adapted from Ad; मनोरथसिद्धं मया T. 2. न्यच्चेदं. Ad. 3. तदिदं तथा Ad. 4. प्रियावाप्तिर्मतो. Ad. also T1. 5. पक्षान्वयाः. 6. also Ad. बन्द्योदयः. T1 7. also Ad. गर्विता. T1 8. also Ad. चरितः T1. 9. विकसन्ति Ad.

इष्टस्यार्थस्य रचना गोप्यगुप्तिः[1] प्रकाशनम् ।
रागप्रयोगस्याश्चर्यं वृत्तान्तस्यानुपक्षयः ॥ ६९ ॥

पुनस्त्रेधा विभागः स्यात्सर्वस्याप्युक्तवस्तुनः[2] ।
[3]सूच्यमेव भवेत्किञ्चिद्दृश्यं[4] श्राव्यमथापरम् ॥ ७० ॥

[5]नीरसोऽनुचितस्तत्र [6]संसूच्यो वस्तुविस्तरः ।
दृश्यस्तु मधुरोदात्त[7]रसभावनिरन्तरः ॥ ७१ ॥

अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥ ७२ ॥

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
[8]संक्षेपार्थस्तु विष्कम्भो [9]मध्यपात्रप्रयोजितः ॥ ७३ ॥

प्रयोजितो भवेच्छुद्धः सङ्कीर्णो नीचमध्यमैः ।
अन्तर्यवनिकासंस्थैश्चूलिकार्थस्य सूचना ॥ ७४ ॥

अङ्कान्तपात्रैरङ्कास्यमुत्तराङ्कार्थसूचना ।
अङ्कावतारस्त्वङ्कान्ते वान्तेऽङ्कस्याविभागतः[10] ॥ ७५ ॥

भूतभाविकथांशानां सूचको नीचभाषया ।
[11]नीचपात्रैः प्रयुक्तोऽङ्कद्वयस्यान्तः प्रवेशकः ॥ ७६ ॥

एभिः संसूचयेत्सूच्यं दृश्यमङ्कैः [12]प्रदर्शयेत् ।
[13]दृश्यस्तु मधुरोदात्तरसभावनिरन्तरः ॥ ७७ ॥

नाट्यधर्ममवेक्ष्यैव श्राव्यं वस्तु त्रिधा[14] मतम् ।
सर्वश्राव्यं च नियतश्राव्यमश्राव्यमेव च ॥ ७८ ॥

---

1. गुप्तेः Ad. also Tl. 2. तत्वस्यायुक्तवस्तुनः Tl. 3. श्राव्य Tl. 4. धृत्य Tl. 5. शिरसा Tl. 6. संभाव्यो Tl. 7. बात्ता Tl. 8. also S Ad संक्षिप्तार्थस्तु Ad. also Tl. 9. मध्याभ्यां मध्यमेन वा. Ad also Tl. 10. विभावतः 11. नीचपात्रै Tl 12. प्रवेशयेत् Tl. 13. as adapted from Ad T. omits the same fully. 14. also S. Ad. यथा Ad.

सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ।
द्विविधं नियतश्राव्यं जनान्तमपवारितम् ॥ ७९ ॥

त्रिपताकाकरेणान्यानपवार्यान्तरा कथा[1] ।
[2]अन्योन्यामन्त्रणं यत्स्याज्ज[3]नान्ते [4]तज्जनान्तिकम् ॥ ८० ॥

रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम्
किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्ये[6]तत्तस्यादाकाशभाषितम् ॥ ८१ ॥

सर्वाङ्गसङ्गतमनेकविधार्थसार्थं
सद्वृत्तनायकविशेषसमग्रशोभम् ।
राज्यं त्वादीयमिव रूपकवस्तुरम्यं
[7]मन्मक्षितीश ! [8]महतां मुदमातनोति ॥ ८२ ॥

**[9]इत्यमृतानन्दयोगीन्द्र[10]विरचितेऽलङ्कारसङ्ग्रहे[11] सन्ध्यङ्गनिरूपणं नाम सप्तमः परिच्छेदः ॥**

1. कथाम् T1. 2. अन्योन्य Ad. 3. तज्जनान्ते Ad. 4. जनान्तिकम् Ad. 6. येकस्त T1 7. मन्न Ad. 8. महतामुदयं तनोति T1. 9. इति श्रमदमृतानन्द Ad. 10. योगिप्रवर Ad. 11. सर्वालंकारसंग्रहे U Ad.

# अष्टमः परिच्छेदः

नेतृव्यापाररूपा या वृत्तिः सा स्याच्चतुर्विधा ।
भारती सात्त्वती चारभटी कैशिक्यतः परम् ॥ १ ॥

चतस्रो वृत्तयो ज्ञेयाः सर्वनाट्यस्य मातृकाः ।
भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः ॥ २ ॥

भरतैस्तु प्रयोज्यत्वाद्भारती चतुरङ्गिका ।
प्ररोचनामुखं चैव वीथी[1] प्रहसनं तथा ॥ ३ ॥

स्थाने प्रहसनस्याऽथ भाणमप्याह कोहलः ।
[2]एतेषां लक्षणं पश्चत्प्रसङ्गादभिधीयते ॥ ४ ॥

सात्त्वती सा[3] मता सत्त्वशौर्यत्यागदयार्जवैः ।
[4]युक्ता हर्षोत्तरा शोकवर्जिता समुदीरिता ॥ ५ ॥

संलापोत्थापकावस्थाः सङ्घातपरिवर्तकौ ।
अङ्गानि चत्वार्येतेषां क्रमाल्लक्षणमुच्यते ॥ ६ ॥

संलापको [5]गभीरोक्तिर्नानाभावरसो यथा ।

"रामः—अयं सः, यः किल सपरिवारकार्तिकेयविजयावर्जितेन भगवता नीललोहितेन [6]परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः ।

परशुरामः—आम्, [7]दाशरथे ! स एव ममाचार्यपादानां प्रियः परशुः ।

अस्त्रप्रयोगखुरलीकलहे गणानां
सैन्यैर्वृतो विजित एव मया कुमारः ।
एतावतापि परिरभ्य कृतप्रसादः
प्रादादमुं प्रियगुणो भगवान् गुरुर्मे ॥ "

---

1. वीथिः T1. वीथ्या G3 Ad. 2. T omits the pāda fully. Adapted from Ad. 3. नाम सा नेतृ T1. also G3 Ad. 4. उक्ता T1. 5. गभितोक्तिर्ना T1. 6. परिomitted in G3. Ad. 7. राम T1.

उत्थापकस्तु यत्रारिं युद्धायोत्थापयेद्यथा ।

"आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यं [1]तु कुतोऽद्य संप्रति मम त्वद्दर्शने चक्षुषः ।
त्वत्साङ्गत्य[2]सुखस्य नास्मि विषयः किं वा बहुव्याहृतै[3]
रस्मिन् विस्मृतजामदग्न्यविजये[4] बाहौ धनुर्जृम्भताम् ॥"

नीत्या दैवेन वा भेदः सख्य[5]: कथ्यते यथा ॥ ७ ॥

"चाणक्यो नीतिसामर्थ्याद्राक्षसीयानभेदयत् ।
भेदो विभीषणस्याऽभूद्रावणाद्दैवयोगतः ॥ ८ ॥"

भेदं साम च दानं च निष्फलीकृत्य यत्र तु ।
परिवर्तक इत्युक्तो दण्डस्वीकरणं यथा ॥ ९ ॥

"(परशुरामः[6]—)

हेरम्बदन्तमुसलोल्लिखितैकभित्ति-
वक्षो विशाखविशिखव्रणलाञ्छितं मे ।
रोमाञ्चकञ्चुकितमद्भुतवीरलाभा-
[7]द्यत्सत्यमद्य परिरब्धुमिवेच्छति त्वाम् ॥

रामः— भगवन् ! परिरम्भणमिति प्रस्तुतप्रतीपमेतत् ।"

मायेन्द्रजालसङ्ग्रामक्रोधभ्रान्त्यादिचेष्टितैः ।
युक्ता भवेदारभटी चत्वार्यङ्गानि तत्र च ॥ १० ॥

संक्षिप्तिका स्यात्संफेटो वस्तूत्थानावपातने ।
संक्षिप्तवस्तुरचना संक्षिप्तिः शिल्पतो[8] यथा ॥ ११ ॥

चरिते वत्सराजस्य कलिङ्गद्विपयोजनम्[9] ।
संक्षिप्तिरथवा नेतृदशान्तरकृतिर्यथा ॥ १२ ॥

---

1. न T. 2. मुखस्य T1. 3. व्याकृतैः; व्यावृतैः. T1 4. विजयो. प्रथमान्तत्वेऽस्य धनुर्विशेषणत्वं अनुशासनप्रयोगयोः पुंस्त्वे धनुश्शब्दस्य विद्यमानत्वात् 5. सङ्गात्यः, सङ्गातः T1. 6. (...) T1. 7. वत्सत्वमेत्य परिलब्धु T1. 8. शिल्पिनो also G3; S Ad. 9. द्वीपयोजगम् T1, G3, S Ad. द्विपयोजना Ad.

वालिनाशेन सुग्रीवः किष्किन्धाधिपतिः कृतः ।
भार्गवस्यापि चौद्धत्यनिवृत्त्या[1] शान्तताश्रयः ॥ १३ ॥

सम्फेटस्तु [2]समाघातः [3]क्रुद्धसंरब्धयोर्यथा ।
लक्ष्मणेन्द्रजितोर्युद्धं रामरावणयोश्च वा[4] ॥ १४ ॥

मायाद्युत्थापितं वस्तु [5]वस्तूत्थापनकं यथा ।
माययेन्द्रजिता[6] युद्धे दिवा [7]ध्वान्तप्रदर्शनम् ॥ १५ ॥

क्षिप्रप्रवेशनिर्वाण[8]सम्भ्रमत्रासविद्रवैः[9] ।
अवपातस्त्वसौ ज्ञेयोऽनिष्टदर्शनतो यथा ॥ १६ ॥

" नष्टं [10]वर्षवरैर्मनुष्यगणना[11]भावादकृत्वा त्रपा-
मन्तः [12]कञ्चुकिकञ्चुकस्य विशति त्रासादसौ[13] वामनः ।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥ "

या रम्यनेपथ्यविशेषयुक्ता
स्त्रीभिर्युता वा बहुनृत्तगीता[14] ।
कामोपभोगप्रचुरप्रकारा[15]
सा कैशिकी वृत्तिरुदाहृता स्यात् ॥

नर्म च नर्मस्पन्दो नर्मस्फोटश्च नर्मगर्भश्च ।
कैशिक्याश्चत्वारो भेदा ह्येते समुद्दिष्टाः ॥ १७ ॥

ललितमधुराभिधानं शृङ्गाररसाश्रयं सुखोपेतम् ।
इच्छाभयहास्ययुतं नर्म त्रिविधं वदन्ति यथा ॥ १८ ॥

" मध्याह्नं गमय त्यज [16]श्रमजलं स्थित्वा पयः पीयतां
[17]मोच्छ्वासं [illegible] विमुञ्च पान्थ, विवशः शीतः प्रपामाण्डपः ।

1. निवृत्तौ Ad. 2. समाधूतः T1. 3. क्रुद्धः T1. 4. यत् G3, Ad. 5. वस्तु-स्थापनकं T1. 6. जिता S.Ad. 7. चन्द्र T1. also G3, S.Ad. 8. निर्याण T1 also Ad. 9. विप्लवैः T1. 10. वर्षधरैः T1 also S.Ad. 11. नाशा T1 also G3 S.Ad. 12. कञ्चुक T1. 13. दयं T1 also Ad. 14. गीतनृत्तैः G3 S.Ad. गीतवृत्त्या T2. 15. प्रचारा T1. also Ad. 16. श्रममरं Ad. 17. नोद्भासन्तु T1. मा शून्येति Ad.

तामेव स्मर घस्मरस्मरशरत्रस्तां निजां प्रेयसीं
त्वच्चित्तं तु न रञ्जयन्ति पथिक ! प्रायः प्रपापालिकाः ॥"

"[1]अभिव्यक्तालीको विफलसकलोपायविभव
श्चिरं ध्यात्वा सद्यो [2]धृतकृतकसंरम्भनिपुणः ।
[3]अतः पृष्टे पृष्टे किमिदमिति संत्रास्य सहसा
कृताश्लेषां[4] धूर्तः स्मितमधुरमालिङ्गति वधूम् ॥"

"शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥"

उत्कण्ठानिर्भरप्रेमनवसङ्गमसम्भ्रमम् ।
अन्ते भयानकं प्राहुः नर्मस्पन्दं तु तद्यथा ॥ १९ ॥

"विसृज सुन्दरि ! सङ्गमसाध्वसं
ननु चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि[5] ॥"

कन्या नायकयोर्यत्र वृत्तं च स्फुटितं भवेत् ।
नर्मस्फोटः स विज्ञेयः सम्भ्रमादियुतो यथा ॥ २० ॥

"गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथवा ।
भ्रमति भुवने [6]कन्दर्पास्त्रं विकारि च यौवनं
[7]ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥"

1. अतिव्यक्तागस्कः G3. S.Ad. 2. also G3. Ad. कृत Ad. 3. इतः Ad. 4. कृताश्लेषं T. 5. त्वयि T1. 6. as adapted from Ad कन्दर्पाज्ञा T. also G3, S.Ad. 7. ललित ललिताः Ad. प्रकृतिमधुराः G3, S. Ad.

नर्मगर्भश्छन्ननेतृव्यलीकार्थाय तद्यथा ।

“ दृष्ट्वैकासनसङ्गते प्रियतमे पश्चादुपेत्याऽऽदरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
तिर्यग्वक्रितकन्धरः [1]सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥ ”

भारती शब्दवृत्तिः [2]स्यादन्यास्तिस्रोऽर्थवृत्तयः ॥ २१ ॥

शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः ।
रसे रौद्रे सबीभत्से वृत्तिः सर्वत्र भारती ॥ २२ ॥

आसां भेदचतुष्केऽस्मिन्नेकैकमपि वाञ्छितम् ।
प्रयोगे कविभिः कार्यं सर्वमेकत्र दुर्लभम् ॥ २३ ॥

पाठ्यं तु संस्कृतं नृणामनीचानां कृतात्मनाम् ।
लिङ्गिनीनां महादेव्या मन्त्रज्ञावेश्ययोः[3] क्वचित् ॥ २४ ॥

स्त्रीणां तु प्राकृतं प्रायः[4] शौरसेन्यधमेषु[5] च ।
पिशाचात्यन्तनीचादौ पैशाचं मागधं तथा ॥ २५ ॥

[6]यद्देश्यं नीचपात्रं स्यात्तद्देश्यं तस्य भाषितम् ।
भगवन्तो ऽवरैर्वाच्या विद्वद्देवर्षिलिङ्गिनः ॥ २६ ॥

विप्रामात्याग्रजाश्चार्या नटीसूत्रभृतौ[7] मिथः ।
रथी सूतेन चायुष्मान् पूज्यैः शिष्यात्मजानुजाः[8] ॥ २७ ॥

[9]वत्सेति तातः पूज्योऽपि सुगृहीताभिधश्च तैः ।
भावो[10]नटेन सूत्री च [11]मारिषस्तेन सोऽपि च ॥ २८ ॥

देवः स्वामीति नृपतिर्भृत्यैर्भट्टेति चाधमैः ।
आमन्त्रणीयाः पतिवज्ज्येष्ठमध्याधमस्त्रियः[12] ॥ २९ ॥

1. सपुलकं G3 S.Ad. 2. दस्यास्तिस्रो T1. 3. वेश्ययोः T1 वैद्ययोः T2. 4. प्राहुः G3 S. Ad. 5. न्याययोऽपि च S. 6. वदेतन्नीच T. 7. कृतौ T1 G3, S.Ad; 8. शिष्यात्मजा अपि G3, S.Ad. 9. वत्सोऽपि. T1. 10. as adapted from T1 भावोनुगेन. T. 11. मार्षेत्येतेन T1. 12. मध्याधमैः T1.

सखी[1] हलेति च प्रेष्या हञ्जे [2]वेश्याज्जुकेति च ।
कुट्टिन्यत्तेत्यनुगतैः पूज्या वा जरती जनैः ॥ ३० ॥

विदूषकेण भवती राज्ञी चेति च शब्यते ।
[3]हण्डे नीचा पुरस्कार्या लालिता तु यवीयसी ॥ ३१ ॥

भगिनीपतिरावुत्तो राजा भट्टारको जनैः ।
युवराजः कुमारः स्याद्भर्तृदारक इत्यपि ॥ ३२ ॥

राजपुत्री तु तद्वत्स्यादार्यपुत्रः पतिः स्त्रिया ।
प्रियेति भर्त्रा राज्ञी स्यात्स्यालो राष्ट्रिय उच्यते ॥ ३३ ॥

देवी कृताभिषेकायामितरासु तु भट्टिनी ।
अत्तिका भगिनी ज्येष्ठा बाला वासूरितीर्यते ॥ ३४ ॥

सद्वृत्तिशालि सरसं नाट्यं नियतभाषितम् ।
त्वच्चरित्रमिवाभाति महितं [4]मन्मभूपते ॥ ३५ ॥

[5]इत्यमृतानन्दयोगीन्द्र[6]विरचितेऽलङ्कारसङ्ग्रहे वृत्तिनिरूपणं [redacted]
अष्टमः परिच्छेदः ॥

---

1. समा Ad. 2. वैश्या T. 3. एतदारभ्य वासूरितीर्यते (३४) इति पर्यन्तम् A3 कोशे न दृश्यते । as noted in Ad. by the Editor. 4. [redacted] Ad. 5. इति श्रीमदमृतानन्द Ad. 6. योगिप्रवर Ad.

## नवमः परिच्छेदः

नाटकं [1]सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा [2]इति ॥ १ ॥

प्रधानरूपकाण्याहुर्दशैतानि विपश्चितः ।
नाटिका सट्टकं तोटो प्रेंखणं[3] गोष्ठिभाणिके[4] ॥ २ ॥

संलापकश्च प्रस्थानं [5]काव्यहल्लीसरासके ।
श्रीगदितं च लासिका [6]दुर्मल्ली नाट्यरासकम् ॥ ३ ॥

उल्लाप्यमुपरूपाणि भवन्त्येतानि षोडश ।
प्रकृतित्वादथान्येषां[7] भूयो रसपरिग्रहात् ॥ ४ ॥

संपूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते ।
रङ्गः सदस्यास्थानोर्वी नेपाथ्यं नटवर्गभूः ॥ ५ ॥

यन्नाट्यवस्तुनः पूर्वं [8]रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः प्रकीर्तितः[9] ॥ ६ ॥

प्रत्याहारोऽ[10]वतरणमारम्भाश्रावणे अपि ।
[11]वक्त्रपाणिः परिघट्टना या संघोटना[12] तथा ॥ ७ ॥

मार्गापसारितं[13] [14]शुद्धापकृष्टोत्थापने तथा ।
परिवर्तनकं नान्दी तथा चैव प्ररोचना[15] ॥ ८ ॥

त्रिगतं चासारितकं तथा गीतिविधिध्रुवा ।
[16]त्रिसामकमतो रङ्गद्वारं स्याद्वर्धमानकम् ॥ ९ ॥

चारिर्महाचारिरिति पूर्वरङ्गाङ्गसङ्गतिः[17] ।
यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ॥ १० ॥

1. च प्रकरणं U,Ad. 2. as adapted from Ad दश T. 3. प्रेंक्षणं Tl. also Ad. 4. भाषिते Tl. 5. as adapted from Ad. काव्यहल्लीशरासकम् T 6. दुर्मती Tl. 7. तथान्येषां U4. Ad. 8. रङ्गे विघ्नो Ad. 9. also U, Ad. स कीर्तितः T. 10. पहरण Tl. 11. चक्रपाणिः Tl. 12. संघोटका Tl. 13. मार्गसारितकं Ad. 14. as adapted from Ad. शुष्का T. 15. प्रलोभना Tl. 16. त्रिसाधुक Tl. 17. संहतिः Ad.

तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ।
आशीर्वचनसंयुक्ता यस्मान्नित्यं भवेदिह ॥ ११ ॥

देवद्विजनृपादीनां तस्मान्नान्दीति शब्दिता ।
नान्दी गुणनिका [1]वाद्यमानद्धादित्रयोत्थितम्[2] ॥ १२ ॥

[3]नन्दीशः पूज्यते पुष्पैः [4]तस्मान्नान्दीति सूच्यते ।
या काचित् पठ्यते सूक्तिर्या कांचिद्देवतां प्रति[5] ॥ १३ ॥

सूत्रधारेण नाट्यादौ सा नान्दी नन्दिनो मुदे ।
मङ्गल्यशंखचक्राब्जकोककैरवशंसिनी[6] ॥ १४ ॥

नान्दी पदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृता[7] ।
[8]पूर्वरङ्गं विधायेत्थं सूत्रधारे विनिर्गते ॥ १५ ॥

प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ।
दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ॥ १६ ॥

सूचयेद्वस्तु बीजं[9] वा मुखं पात्रमथापि वा ।

"रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम् ।
तौ सुग्रीवविभीषणावनुगतौ नीतौ[10] परां संपदं
प्रोद्वृत्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥ "

"यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ "

" [11]आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः[12] ।

---

1. as adapted from Ad. मानन्दी T. 2. त्रयोद्धतम् Tl. 3. वन्दीशः Tl. 4. तेन नान्दीति सोच्यते Ad. 5. यथा नाट्ये सरस्वती A3, Ad. 6. शंसिनाम् Tl 7. द्वाविंशत्याष्टादशैर्वापि पदादिनियमो न वा as read by Ad. as the next Pāda. 8. also U, G3,Ad. नाट्यङ्गं संविधायेत्थं Ad. 9. बीजाद्यैर्मुखम् Tl. also Ad. 10. प्राप्तौ Tl. 11. आसारित Tl. also Ad. 12. विशुद्धकान्तिः Tl.

उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव [1]संभृतबन्धुजीवः ॥ ”

“ तवाऽस्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥ ”

रङ्गं[2] प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ॥ १७ ॥

ऋतुं कंचिदुपादाय[3] भारतीं वृत्तिमाश्रयेत् ।
प्ररोचना प्रशंसा त[4]स्तून्मुखीकरणं यथा ॥ १८ ॥

“ श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥ ”

सूत्रधारो नटीं ब्रूते [5]मारिषं वा विदूषकम् ।
स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥ १९ ॥

प्रस्तावनेति वा [6]तत्र कथोद्घातः प्रवृत्तकम् ।
[7]प्रयोगातिशयश्चाथ [8]वीथ्यङ्गानि त्रयोदश ॥ २० ॥

स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ।
गृहीत्वा प्रविशेत्पात्रं कथोद्घातो[9] द्विधा यथा ॥ २१ ॥

“ द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ”

---

1. संहृत T1. 2. also U, G3, Ad. अनिष्ठुरैश्च मधुरैः श्लोकैर्वाक्यार्थसूचकैः T1. also Ad. 3. दुपास्थाय T1. 4. वस्तून्मुखी T1. 5. मार्षं वाथ T1 also A3 Ad. 6. तस्य कथाद्भेदः प्रवर्तकम् T1. 7. प्रयोगातिशयश्चेति T1. 8. त्रीण्यंगानि T1. वाप्यंगानि T2. 9. तस्त्रिधा T1.

" लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था [1]भवन्ति मयि जीवति धार्तराष्ट्राः ॥ "

कालसाम्यात् प्रवेशो यः प्रवृत्तकमिदं यथा ।

" प्रौढपयोधरभारा[2] प्रावृण्मलिनाम्बरा प्रबाष्पधरा ।
मानसगराजहंसा मानवतीवाऽद्य भाति मदनार्ता ॥ "

एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः ॥ २२ ॥
पात्रप्रवेशो[3] यत्रैषः प्रयोगातिशयो यथा ।

" सौरभेण सहकारपादपः
[4]पद्मतो हरति षट्पदावलिम्[5] ।
रामणीयकगुणेन[6] रागिणीं
कौमुदीदृशमिवैष कैरवः ॥ "

" वर्णयितुमस्य महिमा वसन्तसमयस्य शक्यते केन ।
यदयं विप्रो वृद्धोऽप्युज्झति दामोदरो निजां प्रकृतिम् ॥ "

वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्तेऽत्रैव तानि तु ॥ २३ ॥

उद्घात्यकावलगिते[7] प्रपञ्चत्रिगते छलम् ।
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ॥ २४ ॥

असत्प्रलापव्याहारमृदवानि त्रयोदश ।
[8]वीथीप्रसङ्गे वीथ्यङ्गलक्षणं तत्र[9] वक्ष्यते ॥ २५ ॥

आदौ प्रसङ्गाद्वीथ्यङ्गलक्षणं तत्र कथ्यते ।
एषामन्यतमेनार्थं पात्रं वाऽऽक्षिप्य सूत्रभृत् ॥ २६ ॥

---

1. as adapted from Ad. भवन्तु T. 2. as adapted from Ad. धारा T. 3. प्रयोगो T also U, G3. Ad. 4. पदम्माहरति T1. 5. बलीम् T. 6. मनेन T1. 7. as adapted from Ad, लचिते. 8. आदौ पसङ्गात् A3, U, Ad. 9. तस्य A3, U, Ad.

प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत्[1] ।
पूर्वरङ्गः सभापूजा कवेर्गोत्रानुकीर्तनम्[2] ॥ २७ ॥

नाटकादेस्तथा संज्ञा सूत्रधारोप्यथामुखम् ।
अर्थोपक्षेपकाः चतस्रो वृत्तयोऽपि च ॥ २८ ॥

[4]अर्थोपक्षेपकाः पञ्च चतस्रो वृत्तयोऽपि च ।
[5]नाट्योक्तिश्च [6]समावेशस्तथा भाषाविभाषयोः ॥ २९ ॥

प्रायशः सर्वनाट्येषु कीर्त्यन्ते सङ्गता इमे ।
संज्ञा तु [7]नाटकादीनां नायकेनेतरेण वा ॥ ३० ॥

[8]नायिकानायकाख्यानात्संज्ञा प्रकरणादिषु ।
नाटिका सट्टकादीनां [9]नायिकाभिर्विशेषणम् ॥ ३१ ॥

[10]अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान् ।
कीर्तिकामो महोत्साहस्त्रय्यास्त्राता महीपतिः ॥ ३२ ॥

प्रख्यातवंशो [11]राजन्यो दिव्यो वा यत्र नायकः ।
तत्प्रख्यातं विधातव्यं वृत्तमत्राधिकारिकम् ॥ ३३ ॥

यत्तत्रानुगतं[12] किञ्चिन्नायकस्य रसस्य वा ।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥ ३४ ॥

यथा वालिवधस्त्यक्तश्छद्मनोदात्तराघवे ।
कल्पितो वीरचरिते वधस्तस्यैव चाऽन्यथा ॥ ३५ ॥

आद्यन्तमेवं[13] निश्चित्य पञ्चधा तद्विभज्य च ।
खण्डशः सन्धिसंज्ञांस्तान्भागानपि च खण्डयेत् ॥ ३६ ॥

1. as adapted from Ad. प्रपन्चयेत् T. 2. वर्णनम् T1, S, Ad. 3. as adapted from Ad. पञ्च तथाङ्गविधिरेव च T1. 4. as adapted from Ad अर्थप्रकृतयः T. 5. नाटचोक्तश्च T1. 6. समादेशः T1. 7. नायकादीनां T1. 8. नायकानायिक. T1. 9. नायकादिवि T1. 10. अधिगम्य T1. 11. as adapted from Ad. राजर्षिदिव्यो T. 12. as adapted from Ad. नुचितं T. यत् स्यादनुचितवस्तु इति सामान्यो पाठः सं. 13. मेष T1.

द्वित्रिद्वित्रिचतुर्युक्तदशसंख्यान्यनुक्रमात् ।
चतुःषष्टिश्च तानि स्युरङ्गानि त्विह सन्धिषु ॥ ३७ ॥

आदौ विष्कम्भकं कुर्यादङ्कं[1] वा कार्ययुक्तितः ।
अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् ॥ ३८ ॥

यदा सन्दर्शयेच्छेषं कुर्याद्विष्कम्भकं तथा[2] ।
यदा तु सरसं वस्तु मूलादेव प्रवर्तते ॥ ३९ ॥

आदावेव तदा कुर्यादामुखाक्षेपसंश्रयम्[3] ।
प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः[4] ॥ ४० ॥

अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ।
अनुभावविभावाभ्यां स्थायिनो[5] व्यभिचारिभिः[6] ॥ ४१ ॥

गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम्[7] ।
न चातिरसतो वस्तु[8] दूरं विच्छिन्नतां नयेत् ॥ ४२ ॥

रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः ।
एको रसोऽङ्गी कर्तव्यो वीरः शृङ्गार एव वा ॥ ४३ ॥

अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम् ।
दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ॥ ४४ ॥

संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ।
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत्[9] ॥ ४५ ॥

नाधिकारिवधं क्वापि त्याज्यमावश्यकं न[10] च ।
एकाहचरितैकार्थं कुर्याच्चासन्ननायकम् ॥ ४६ ॥

पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ।
एवमङ्काः प्रकर्तव्याः प्रवेशादिपुरस्कृताः ॥ ४७ ॥

---

1. दङ्गं. Tl. 2. तदा Ad. 3. दामुखापेक्षसंश्रयम्. संश्रयः Tl; A. Ad. 4. व्यक्तिपुरस्कृतः Ad. समन्वितः Tl. व्यक्ति समन्वितः G3, S.Ad. Tl. 5. स्थायिना T. 6. व्यभिचारिणिः Tl. 7. तोषणम् Tl. ८. दूरे S.Ad, दूरविच्छि. Ad. 9. न दर्शयेत् Ad. 10. क्वचिन् T‍. also U.G3.Ad.

पञ्चाङ्कं च षडङ्कं च सप्ताङ्कं च तथाऽपरम् ।
अष्टाङ्कं च नवाङ्कं च दशाङ्कं नाटकं विदुः ॥ ४८ ॥

मारीचवञ्चनं[1] नाम पञ्चाङ्कं परिकीर्तितम् ।
वेणीसंहारसंज्ञं तु षडङ्कं नाटकं मतम् ॥ ४९ ॥

शाकुन्तलं तु सप्ताङ्कमष्टाङ्कं नलविक्रमम्[2] ।
देवीपरिणयाख्यानं नवाङ्कं परिकीर्तितम् ॥ ५० ॥

बालरामायणं नाम दशाङ्कं नाटकं स्मृतम्[3] ।

अथ प्रकरणम्—

अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम् ॥ ५१ ॥

अमात्यविप्रवणिजामेकं कुर्याच्च नायकम् ।
धीरप्रशान्तं सापायं धर्मकामार्थतत्परम् ॥ ५२ ॥

[4]नायिका तु द्विधा नेतुः कुलस्त्री गणिका तथा ।
क्वचिदेकैव कुलजा वेश्या क्वापि द्वयं क्वचित् ॥ ५३ ॥

आभिः प्रकरणं त्रेधा शुद्धं स्यात्कुलजान्वितम् ।
सङ्कीर्णं वेश्यया युक्तं मिश्रं तद्द्वयसङ्गतम्[5] ॥ ५४ ॥

शेषं नाटकवत् [6]सन्धिप्रवेशिकरसादिकम् ।

अथ भाणः—

भाणस्तु धूर्तचरितं स्वानुभूतं परेण वा ॥ ५५ ॥

यत्रोपवर्णयेदेको निपुणः पण्डितो विटः ।
सम्बोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः ॥ ५६ ॥

सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यसंस्तवैः ।
भूयसा भारतीवृत्तिरेकाङ्कं वस्तु कल्पितम् ॥ ५७ ॥

---

1. वचनं Ad. 2. नलवीजयः T1. also Ad. 3. मतम् Ad. 4. नायिकां तद्विधां नेतुः कुर्यात् स्त्रीं गणिकां तथा. । T1. also Ad. 5. also G3,U.S.Ad. संकरात् Ad. 6. सर्न T1.

मुखनिर्वहणे साङ्गे लास्याङ्गानि दशापि च ।

लास्याङ्गानि—

[1]गेयपदं स्थितपाठ्यमासीनं पुष्पगन्धिका ॥ ५८ ॥

[2]प्रच्छेदकस्त्रिमूढं च सैन्धवाख्यं द्विमूढकम् ।
उत्तमोत्तमकं चैवमुक्तप्रत्युक्तमेव[3] च ॥ ५९ ॥

लास्ये दशविधं ह्येतदङ्गनिर्देशकल्पनम् ।
सुखासीना श्रुतिमुखं यत्र गायन्ति गायकाः ॥ ६० ॥

ततादिवाद्यमिश्रं तच्छुष्कं गेयपदं यथा ।

सुखासीनाः सन्तः सुरभिकुसुमामोदसुभगे
[4]तले सान्द्रच्छाये तरुणसहकारस्य शिशिरे ।
कलैर्वीणावाद्यैः[5] सममृदुलसन्दिग्धवचसो[6]
[7]रसावेशोल्लासान्मदनमिह[8] गायन्ति मधुरम्[9] ॥'

पठेद्यत्रासनासीना[10] प्राकृतं विरहातुरा ।
अङ्गनानङ्गतप्ताङ्गी स्थितपाठ्यं मतं यथा ॥ ६१ ॥

"रत्ति[11] ए हित्थहिअओ महुअर मोत्तूण पदुमिणीमण्णत्तो ।
गच्छसि गच्छ पुणो सा पेच्छादिणण्णं णिमीलिदंबुरुहच्छी ॥
(रात्र्या त्रस्तहृदयो मधुकर ! मुक्त्वा पद्मिनीमन्यत्र ।
गच्छसि गच्छ पुनः सा पश्यति नान्यं निमीलिताम्बुरुहाक्षी ॥)"

शोकचिन्तापरवशं वाद्याभिनयवर्जितम् ।
आस्यते यत्र कामिन्या तदासीनं मतं यथा ॥ ६२ ॥

"बाले ! मालतिके !

---

1. गेयं पदं स्थितं पाठ्यं T1. 2. प्रभेदक T1. 3. चान्यदुक्त Ad. 4. तते T1 5. क्वाणै T1. 6. वचसा T1. 7. समावेशो T1. 8. मधुरमिह गायन्ति Ad.T1. 9. U.G3 Ad. 10. यत्तु समासीना. T1. 11. as adapted from Ad. T reads the passage vaugely.

म्लानं ते वदनं मनो[1]विगलितं मन्दो विलासक्रमः
चिन्ताशोकवशं चिरोज्झितसुखं चित्तं वपुर्धूसरम् ।
निःशब्दाभिनयं निवेश्य[2] विजने त्वं चेष्टसे नो यथा[3]
प्रालेयप्रकरेण पीडितपरिक्लिष्टाम्बुजा पद्मिनी ॥ "

नर्तक्याः पुरुषस्येव प्रगल्भं चेष्टितं यथा[4] ।
नैकभेदं च सङ्गीतं स्याद्यथा[5] पुष्पगन्धिका ॥ ६३ ॥

" ग्रीवाविभूषणविषक्तदुकूलकोण[6]-
संछन्नपीवरपयोधरभारनम्रा ।
मैरेयमत्तमहिलाकरदत्तताल-
मातन्वती समदनर्तनमाविरास्ते ॥

सखि शारदिके ! पुंवत्प्रगल्भा विविधगानमुखरविलासिनीमध्यगता[7] निष्कम्पं नृत्यसि । "

स हि प्रच्छेदको यत्र ज्योत्स्नासम्पातविक्लबाः ।
कामिन्यो यान्त्यपव्रीडाः सागसोऽपि प्रिया यथा ॥ ६४ ॥

" [8]प्रशिथिलनिजलज्जाः प्राङ्मुखं वीक्षमाणा-
स्तिमिरविगमभीतास्तीर्णमार्गाश्च तूर्णम्[9] ।
वलयचलनलोला वञ्चितात्मीयलोकाः
सततमभिसरेयुः सागसोऽप्यात्मनाथान्[10] ॥ "

पुंभावप्रचुरं नाट्यं समवृत्तपरिष्कृतम् ।
मृदुश्लक्ष्णपदं यत्र तत् त्रिगूढं स्मृतं यथा ॥ ६५ ॥

" अस्याः खलु—

---

1. also S.A2. Ad. मदोविगलितम् Ad. 2. also S.Ad. निविश्य Ad. 3. मदा. T1. 4. यदा Ad. 5. सा ज्ञेया Ad. 6. यिषस्त T1. 7. मण्डलीमध्यगताAd. 8. as adapted from Ad. प्रचलित T. also S, A2 Ad. तूर्णमुद्गीर्णमार्गाः. T1. 9. स्मिमिरविरतिभीतास्तूर्णमुत्तीर्णमार्गः Ad. 10. पि स्वनाथान् T1.

अभिनयशस्तौ हस्तौ पादौ परिभूतकिसलयौ सलयौ ।
अङ्गं रञ्जितरङ्गं[1] नृत्तं पुंभावशालि समवृत्तम् ॥ ''

न नाट्ये लक्ष्यते पाठ्यं[2] पात्रं[3] सङ्केतवर्जितम् ।
जायते सैन्धवी भाषा यत्र तत्सैन्धवं यथा ॥ ६६ ॥

" नाट्यमलक्षितपाठ्यं[4] पात्रे सङ्केतवर्जितं[5] यत्र ।
सैन्धवभाषा चतुरैर्विहितं वैदेशिकैर्नटैर्वीथ्याम् ॥ ''

रसभावाः परिक्लिष्टाश्चतुरस्रः परिश्रमः ।
मुखप्रतिमुखे चित्रे तद् द्विमूढं मतं यथा ॥ ६७ ॥

" अत एव खल्वस्याः—

रसभावाः परिक्लिष्टाः प्रौढो विद्यापरिश्रमः ।
चित्रे मुखप्रतिमुखे सलयः पादयोः क्रमः ॥ ''

विचित्राः श्लोकसन्दर्भा यत्र नानाविधो रसः ।
हेला भावाश्च ललिताश्चोत्तमोत्तमकं यथा ॥ ६८ ॥

" केयमपटीक्षेपेण[6] प्रविशति ?

" अङ्कूरत्कुचमप्यनल्पविलसत्तत्सन्निवेशक्रमं
वक्षोऽस्या वलिरेखिकाभिरुदरं वामभ्रुवो वास्यते ।
अङ्गं रङ्गदशामनङ्गनृपतेः कारागृहं श्रीयते
भावैश्चित्रपदार्थभावितरसान् श्लोकान् पठत्याननम् ॥ ''

पदानि साधिक्षेपाणि चित्रं गीतार्थयोजनम् ।
यत्र कोपप्रसादाभ्यामुक्तप्रत्युक्तकं यथा ॥ ६९ ॥

" अपि च—तस्याः पश्चान्निषण्णा काचित् कुपिता—

---

1. also U.G3;S.Ad. चित्तजरङ्गं Ad. 2. [redacted] U;G3.Ad. 3. पात्रे. T1.
4. वाद्यं U;G3.Ad. 5. वञ्चनं T1. 6. पटाक्षेपेण T1. पयधं T1.

गायति गेयं[1] साधिक्षेपपदं सहचरीमुखे स्खलिते ।
तस्यामियं प्रसन्ना चित्रं गीतार्थमभिनयत्यङ्गैः[2] ॥"

अथ प्रहसनम्—

अथ प्रहसनं त्रेधा शुद्धवैकृतसङ्करैः ।
पाषण्डविप्रप्रभृतिचेटचेटीविटाकुलम् ॥ ७० ॥

चेष्टितं वेषभाषादिशुद्धं[3] हास्यवचोन्वितम् ।
कामुकादिवचोवेषैः षण्डकञ्चुकितापसैः ॥ ७१ ॥

विकृतं, सङ्कराद्वीथ्या सङ्कीर्णं धूर्तसङ्कुलम् ।
रौद्रबीभत्सरहिता रसाः स्युर्हास्य एव वा ॥ ७२ ॥

भाणवत्सन्धिलास्याङ्गान्येकाङ्कं द्व्यङ्कमेव वा ।

अथ डिमः—

डिमे वस्तु प्रसिद्धं स्याद्वृत्तयः कैशिकीं विना ॥ ७३ ॥

नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ॥ ७४ ॥

रसैरहास्यशृङ्गारशान्तैः षड्भिः समन्वितः ।
मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ॥ ७५ ॥

चन्द्रसूर्योपरागैश्च न्याय्ये रौद्ररसेऽङ्गिनि ।
चतुरङ्कश्चतुःसन्धिर्निर्विमर्शो डिमः स्मृतः ॥ ७६ ॥

इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम् ।
ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ॥ ७७ ॥

अथ व्यायोगः—

ख्यातेतिवृत्तो व्यायोगः ख्यातोद्धतनराश्रयः ।
हीनो [4]गर्भावमर्शाभ्यां दीप्ताः स्युर्डिमवद्रसाः ॥ ७८ ॥

1. गीतं T1. 2. त्युच्चैः T1. also U;G3 Ad. 3. as adapted from A वेषभाषाभिः शुद्धं T. 4. [illegible] adapted from Ad. गर्भवि T.

अङ्गीनिमित्तसङ्ग्रामो जामदग्न्यजयो[1] यथा ।
एकाहचरितैकाङ्को व्यायोगो बहुभिर्नरैः ॥ ७९ ॥

अथ समवकारः—

कार्यं समवकारेऽपि चामुखं नाटकादिवत् ।
ख्यातं देवासुरं वस्तु निर्विमर्शास्तु सन्धयः ॥ ८० ॥

वृत्तयो हीनकैशिक्यो नेतारो देवदानवाः ।
[2]द्वादशोद्धतविख्याताः फलं तेषां पृथक् पृथक् ॥ ८१ ॥

[3]अङ्गी वीरोऽङ्गानि चान्ये यद्वदम्भोधिमन्थने ।
अङ्कैस्त्रिभिस्त्रिकपटस्त्रिशृङ्गारस्त्रिविद्रवः ॥ ८२ ॥

द्विसन्धिरङ्कः प्रथमः कार्यो द्वादशनाडिकः ।
[4]चतुर्द्विनाडिकावन्त्यौ नाडिका घटिकाद्वयम् ॥ ८३ ॥

वस्तुस्वाभावदैवारिकृताः[5] स्युः कपटास्त्रयः ।
धर्मार्थकामैः शृङ्गारो[6] नात्र बिन्दुप्रवेशकौ ॥ ८४ ॥

व्रताद्युज्ज्वलता शौचं धर्मशृङ्गार उच्यते ।
मुक्तारत्नाद्यलङ्कारैरर्थशृङ्गार उच्यते ॥ ८५ ॥

सम्भोगविप्रलम्भादिः कामशृङ्गार इत्ययम् ।
पुरावरोधयुद्धे[7]भवाताग्न्यादिकविद्रवाः ॥ ८६ ॥

वीथ्यङ्गानि[8] यथालाभं कुर्यात्प्रहसने[9] यथा ।

अथ वीथी—

वीथी[10] तु कैशिकीवृत्तौ[11] सन्ध्यङ्गाङ्काश्च[12] भाणवत् ॥ ८७ ॥

---

1. also Ad. जये T. 2. शोदात्त T. 3. बहुवीररसाः सर्वे T1. 4. चतुर्दिना-लिका T1. 5. दैवादि T1. 6. श्रुङ्गारा Ad. 7. पुरोपरोधयुद्धे T. 8. वीथ्यङ्गादि U;G3.Ad. 9. प्रहसनंAd. 10. विदितं T1. 11. as adapted from Ad. वृत्त्या T. 12. as adapted from Ad ङ्कैश्च T.

रसः सूच्यस्तु शृङ्गारः स्पृशेदपि रसान्तरम् ।
नायिकानायकौ कार्यौ शृङ्गारद्वयसंश्रयौ ॥ ८८ ॥

अथ वीथ्यङ्गानि—

युक्ता प्रस्तावनाख्यातैरङ्गैरुद्घात्यकादिभिः ।
उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम् ॥ ८९ ॥

वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि त्रयोदश ॥ ९० ॥

गूढार्थपदपर्यायमाला प्रश्नोत्तरस्य वा ।
यत्रान्योन्यसमालापो द्वेधोद्घात्यं मतं यथा ॥ ९१ ॥

" मानवती—अय्ये ! कादम्बिणि ! आआदो तुह कालो ।
( आर्ये कादम्बिनि, आगतस्तवकालः । )

कादम्बिनी—वत्से ! मानवति ! अत एव खल्वहं विहरामि । किं त्वकाले-
ऽप्ययं राजहंसः प्रविष्ट इति विचारयामि[1] ॥

राजा— (समन्तादवलोक्य अनाकलितविहङ्गविहारः स्वगतम् )

वचनमिदमात्मविषयं वर्णितमनयावधार्यते युक्त्या ।
प्रमदानामनुरागः प्रायः प्राप्तैरपि प्रियं तनुते ॥

मानवती— अय्ये ! राअहंसो कहिं दिट्ठो ?
( आर्ये ! राजहंसःकुत्र दृष्टः ? )

कादम्बिनी— वत्से ! तव मानसे ।

मानवती—अय्ये मत्तासि ! (आर्ये मत्तासि । ) "

" का श्लाघा गुणिनां क्षमा परिभवः को यः स्वकीयैः कृतः
किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते ।

1. चरामि. T1.

का मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः
कैर्विज्ञातमिदं विराटनगरे छन्नस्थितैः पाण्डवैः ॥ "

यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ।
प्रस्तुतेऽन्यत्र वा तत्स्याद्द्विधावलगितं यथा ॥ ९२ ॥

'रामः—लक्ष्मण ! तातवियुक्तामयोध्यां विमानस्थो नाहं प्रवेष्टुं शक्नोमि, तदवतीर्य गच्छामि ।

(इत्यवतीय कतिचित्पदानि गत्वा निरूप्य)

" [1]कोऽयं सिंहासनस्याधः स्थितः पादुकयोः पुरः ।
जटावानक्षवलयी[2] च [3]चामरी च विराजते ॥ "
इति भरतदर्शनकार्यसिद्धिः[4]

विदूषकः—(अपवार्य) वअस्स! मह कण्ठे, कासेण कंडूदि होदि, किं कादव्यम्?

(वयस्य, मभ कण्ठे काशेन कण्डूतिर्भवति ।

रामः—(सानुनयं) वयस्य ! सकर्पूरं ताम्बूलं चर। तावता [6]कण्ठकण्डूर्निवर्तते।
ताम्बूलं चेदम् । "

असद्भूतं मिथःस्तोत्रं प्रपञ्चो हास्यकृद्यथा ।

"राजा—वयस्य ! त्वया वयमतिसंहिताः ।

विदूषकः—वअस्स, तुए एव्व सिक्खिदणेवुणो तुह एव्व कहं अदिसंदाणं कप्पेमि । किंदु
घडेमि अण्णेण परस्स जाअं मुणीण मोएमि वदं मुहुत्ते।
मणस्सिणीणं विहडेमिमाणं तुह प्पाहावेण तणोमि सव्वं[7] ॥ "

वयस्य, त्वयैव शिक्षितनैपुणस्तवैव कथमतिसंधानं कल्पयामि। किन्तु,

1. कोऽपि. T1. also A.Ad. 2. as adapted from Ad. also T1. नक्ष मालो च T. 3. as adapted from Ad. चामरीवा, चारुरेव U. G3.Ad. 4. not found in Ad. 5. राजा Ad. 6. also U;G3.Ad. कण्डूति Ad. 7. पूर्ण S.Ad.

घटयाम्यन्येन परस्य जायां मुनीनां मोचयामि व्रतं मुहूर्ते।
मनस्विनीनां निघटयामि मानं तव प्रभावेण तनोमि सर्वम् ॥)[1] "

श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह ॥ ९३ ॥
नटादित्रितयालापः पूर्वरङ्गे मतं [redacted] ।

" नटी—अय्य ! तहा होदु ।
( आर्ये, तथा भवतु )
सूत्रधारः— (आकाशमवलोक्य)

विलोलविद्युल्लतिकावरत्रा
विनिःसरद्वारिमदप्रवाहाः[2] ।
धनद्विपा गर्जितबृंहिताढ्या-
श्चरन्ति खे चातकचञ्चरीकाः ॥ "

[3]प्रियाभैरप्रियैर्वाक्यैर्विलोभश्छलनं [redacted] ॥ ९४ ॥

" राजा— (सोत्प्रासम्)

समसुखदुःखः संप्रति सखा ममान्योऽस्ति कस्त्वया सदृशः।
यदमुष्मिन्नपि यतसे कार्ये साहाय्यमेवमाचरितुम् ॥ "
विनिवृत्त्यास्य वाक्केली द्विस्त्रिः[4] प्रत्युक्तितो यथा ।

" मानवती—अय्ये ! कादम्बिणि !
अणिसं पि मअरकेदू अयमणिवारिदवेरहृदुत्साहो।
तं पि दहेरिंकमं विअ दाहो एक्केण तेण दुव्वज्जो[5] ॥ "

( आर्ये, कादम्बिनि,
अनिशमपि मकरकेतुरयमनिवारितवैरहृदुत्साहः।
तमपि दहेरिंक मामिव दाह एकेन तेन दुर्वार्यः ॥ )

---

1. as adapted from Ad. 2. वहप्रवाहाः Tl. 3. प्रियार्थैं Tl. 4. as adapted from Ad. वाक्केलि द्विस्त्रिः T. 5. as adapted from Ad.

कादम्बिनी—

मन्मथो ननु मात्सर्यात्तद्रूपविजितस्तव ।
तापं तनोति नामुष्य नान्यथा कथमागतः ॥

मानवती— अय्ये ! सो एव्व सव्वत्त[1] दीसई कहं णाअदो ?
( आर्ये, स ‌ व सर्वत्र दृश्यते । कथं नागत ?)[1] ”
अन्योन्यवाक्याधिक्योक्तिः[2] स्पर्धयाधिबलं यथा ॥ ९५ ॥

“ भीमः—

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते-
तृणमिव परिभूतो यस्य गर्वेण लोकः । ”

[3]इत्युपक्रमे—अरे ! नाहं भवानिव विकत्थनाप्रगल्भः ।

किन्तु—

द्रक्ष्यन्ति न चिरात्सुप्तं बान्धवास्त्वां रणाङ्गणे ।
मद्गदाभिन्नवक्षो[4]ऽस्थिवेणिकाबन्धभीषणम्[5] ॥ ”

गण्डं प्रस्तुतधिक्कारि भिन्नं वेगोदितं यथा ।

“ कादम्बिनी—वत्से ! समागतः[6] ।

मानवती —(सानन्दं) अय्ये कोऽसौ ? (आर्ये, कोऽसौ ?)

कादम्बिनी—[7]तवानुजः ।

मानवती — (सविषादं) ”

अमुमेवान्यथा गण्डं[8] प्राहुः पञ्चविधं परे[9] ॥ ९६ ॥

आकस्मिकमसम्बन्द्धं[10] सम्बन्द्धमिव यत्पदम् ।
वाचामन्ते स गण्डः स्याद्भाव्यनिष्टार्थसूचकः[11] ॥ ९७ ॥

1. as adapted from Ad. 2. वाक्यैरत्युक्तिः Tl also Ad. 3. इत्युक्त क्रमेण. Tl. 4. वक्षोऽब्धि Tl. 5. भूषणम् Tl. 6. समागता. Tl. 7. तवानुजा Tl. 8. प्रायाः Tl. 9. पठेत् Tl. 10. as adapted from Ad. सम्बन्धं सम्बन्धा. T. 11. सूचकम् Ad.

प्रतिहारो रहो हर्षः [1]प्रतिभा व्याहतोऽपि च ।
प्रतिक्रियान्वितो यस्तु प्रतिहारो मतो यथा ॥ ९८ ॥

"को मां हन्तुं [2]समर्थः स्यादित्युक्तो रावणेन तु ।
राक्षसो राम इत्याह किं राम इति चोदितः ।

पुनराह यदा रामः कदाचिदुपयास्यति[3] ।
दूरीकृत्य[4] परं मोहादशिवां[5] [6]वाचमाहरत् ।"

आत्मानं निर्दिशेद्यस्तु स रहोगण्ड उच्यते ॥

"यथा दुर्योधनो भीमं हन्तीत्याशयवान् भ्रमात् ।
प्राह दुर्योधनं भीमो हन्तीति कुरुनायकः ॥"

उत्सवोच्छ्रूकरोमाञ्चः प्रविश्यामोदकृद्वचः ॥ ९९ ॥

भाषते भावि यत्रासौ हर्षगण्डः स्मृतो यथा ।

"केनाप्यर्थेन कंसस्येत्युक्तवत्येव यादवे ।
नृत्यन्नानर्तकोऽप्याह दारको जातवानिति ॥"

उक्तमन्यार्थमन्येन वचोऽन्यार्थं प्रकल्पयेत् ॥ १०० ॥

सामान्यपदसामर्थ्यात् स गण्डः प्रतिभा यथा[7] ।

"यो जातोऽन्यत्र योऽन्यत्र वर्धितो मधुसम्भवः[8] ॥
परपुष्टः स क्रुद्धोऽयं[9] मारयत्यनिवारितः ।
इत्युत्कण्ठितया प्रोक्तं कंसेनाऽङ्गितमन्यथा ॥"

द्व्यर्थो वाक्यस्य विन्यासः शुभाशुभसमन्वितः ॥ १०१ ॥

प्रत्यक्षं प्रोच्यते यत्र गण्डः स व्याहतो मतः ।
"यथा देवमुनिस्तत्र दानवं कंसमब्रवीत् ।

1. प्रतिबोध्याहतो; प्रतिभोव्या. T1. 2. प्रवृत्तः; T1. 3. as adapted from Ad. यथा T. दपि वां. T1. 4. as adapted from Ad. ऊरीकृत्य T. 5. रस तस्याः. T1. 6. as adapted from Ad. ताप T. ताव T1. 7. मता Ad. 8. यदुपुत्रस्य मघोर्वंशेजातः as explained by the Ed. in Ad. 9. संक्रुद्धो Ad

सभृत्यबलवीर्यस्य प्राप्तोऽसि भवतः क्षयम् ॥ ''

[1]प्रसक्तस्याऽन्यथा व्यख्या [2]यत्रावस्यन्दितं यथा ॥ १०२ ॥

सीता — जाद ! कल्लं खु तुम्हेहिं अजुज्झाए गन्तव्वं । तहिं सो राआ विणएण णमिदव्वो ।

(जात, कल्यं खलु युवाभ्यामयोध्यायां गन्तव्यम् । तत्र स राजा विनयेन नन्तव्यः)

लव :— अम्ब[3] ! किमावाभ्यां राजोपजीविभ्यां भवितव्यम् ? ।

सीता— जाद ! सो खु तुम्हाणं पिदा ।

(जात, स खलु युवयोः पिता)

लव :— किमावयो रघुपतिः पिता ?

सीता — (साशङ्कम्) जाद ण कहु तुम्हाणं । सअलाए एव्व पुहवीए ।

(न खलु युवयोः । सकलाया एव पृथिव्याः) ''

बहुप्रपञ्चसंयुक्ता हास्यलेशसमन्विता ।

प्रहेलिकेव गूढार्था नालिकेत्युच्यते यथा ॥ १०३ ॥

" राजा — (पुरतो निर्वर्ण्य)

वल्लरी किमुत वामलोचना

दूरतो वसति दृष्टिवर्तिनी ।

वायुना चलति किं नु नर्तिता[4]

सन्मुखी मदनवेदनासहा[5] ॥ ''

विदूषकः— वअस्स ! मए विणिच्चिदिम् ।

(वयस्य मया विनिश्चितम्) ''

असम्बद्धकथाप्रायोऽसत्प्रलापो यथोत्तरः ।

विरहोन्मत्तबालादिभाषणेषु मतो यथा ॥ १०४ ॥

---

1. as adapted from Ad. रसोक्तस्य T. रसस्तस्याः T1. 2. विचार्या बुद्धिशालिभिः. T1. 3. omit Ad. 4. as adapted from Ad. वर्तिना T. 5. as adapted from Ad. वेदना सहे (Sic) T.

"हंस ! प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता ।
विभावितैकदेशेन स्तेयं तदभियुज्यते ॥"

"भुक्ता हि महागिरयः स्नातोऽहं वह्निना पिबामि नभः ।
हरिहरहिरण्यगर्भा मम पुत्रास्तेन नृत्यामि ॥"

"अर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कणो वासुके-
[1]रङ्गुल्या विषकर्बुरान्गणयतः संस्पृश्य दन्ताङ्कुरान् ।
[2]एकं त्रीणि नवाष्ट सप्त षडितिप्रत्यस्तसङ्ख्याक्रमा
वाचः क्रौञ्चरिपोः शिशुत्वविकलाः[3] श्रेयांसि पुष्णन्तु वः ॥"

अन्यार्थ एव व्याहारो हास्यलेशकरो यथा ।

"(लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति)

विदूषकः—मा दाव उवससुद्धा गमिस्ससि ।
(मा तावत्, उपदेशशुद्धा निर्गमिष्यसि)

इत्युपक्रमेण—

गणदासः—(विदूषकं प्रति) आर्य ! उच्यतां यस्त्वया क्रमभेदो लक्षितः ।

विदूषकः—पढमप्पयोगे बम्हणस्स पूआ भोदि। सा ता णकिदा (प्रथमप्रयोगे ब्राह्मणस्य पूजा भवति। सा तथा न कृता) (मालविकास्मयते)"

दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं यथा ॥ १०५ ॥

"कष्टं खलु विप्रकुले जननं कष्टं च भार्यया विरहः ।
धन्याः शूद्रा येषां दारपरिग्रहणमल्पमूल्येन ॥"

एवं दिशि विधातव्या द्वित्रिपात्रप्रयोजिता ।

आथाङ्कः—

उत्सृष्टिकाङ्के प्रख्यातं वृत्तं बुद्ध्या प्रपञ्चयेत्[4] ॥ १०६ ॥

---

1. स्तर्जन्या Ad. 2. पञ्च Ad. 3. शक्तिधरस्य मौञ्जकला: Ad, also Tl.
4. योजयेत् Ad.

रसस्तु करुणः स्थायी नेतारः प्राकृता नराः ।
भाणवत्सन्धिवृत्त्यङ्गैर्युक्तः स्त्रीपरिदेवितैः ॥ १०७ ॥

वाचा युद्धं विधातव्यं तथा जयपराजयौ ।

अथेहामृगः—

मिश्रमीहामृगे वस्तु चतुरङ्कः त्रिसन्धिमत्[1] ॥ १०८ ॥

नरदिव्यावनियमान्नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्त्यो विपर्यासादयुक्तकृत् ॥ १०९ ॥

दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः[2] ।
शृङ्गाराभासमप्यस्य[3] किञ्चित् किञ्चित् प्रदर्शयेत् ॥ ११० ॥

संरंभं परमानीय युद्धं व्याजान्निवारयेत् ।
वधं प्राप्तस्य कुर्वीत परं[4] नैव महात्मनः ॥ १११ ॥

कैशिकीवृत्तिरहितो हास्यशृङ्गारवर्जितः ।
अत्र षण्णायकानन्ये वदन्तीहामृगे नरान् ॥ ११२ ॥

अथ नाटिका—

लक्ष्यते नाटिकाप्यत्र मिश्रवस्तुसमाश्रया ।
तत्र वस्तु प्रकरणान्नाटकान्नायको नृपः ॥ ११३ ॥

प्रख्यातो धीरललितः शृङ्गारोऽङ्गी सलक्षणः ।
देवी तत्र भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥ ११४ ॥

गम्भीरा मानिनी कृच्छ्रात्तद्वशान्नेतृसङ्गमः ।
[5]नायिका तादृशी मुग्धा दिव्या वाऽतिमनोहरा ॥ ११५ ॥

अन्तः पुरातिसम्बन्धादासन्ना श्रुतिदर्शनैः ।
अनुरागो नवावस्थो नेतुस्तस्यां यथोत्तरम् ॥ ११६ ॥

1. मान् Ad. 2. रोऽधिगच्छतः. T1. 3. प्यत्र Ad. 4. as adapted from Ad. वधं T. 5. प्राप्या तु Ad.

नेता तत्र प्रवर्तेत देवीत्रासेन [1]शङ्कितः ।
कैशिक्यङ्गैश्चतुर्भिश्च युक्ताङ्कैरिति नाटिका ॥ ११७ ॥

अथ सट्टकम्—

सट्टकं नाटिकावत्स्यात् किंत्वेतत् प्राकृतैः कृतम् ।
प्रवेशकविहीनं च शृङ्गाराद्भुतभूषितम् ॥ ११८ ॥

चतुर्यवनिकं कार्यं वयस्यन्तं प्रकीर्तितम् ।

अथ त्रोटकम्—

दिव्यमानुषसंयोगो यत्राङ्केऽङ्के विदूषकः ॥ ११९ ॥

त्रोटकं नाम तद्ज्ञेयं गूढनाटकलक्षणम् ।
सप्ताष्टनवपञ्चाङ्कमन्यन्नाटकवन्मतम् ॥ १२० ॥

सप्ताङ्कं स्तम्भितारम्भस्त्वष्टाङ्कं मदलेखिका[2] ।
मेनकानहुषाख्यं स्यान्नवाङ्कं परिकीर्तितम् ॥ १२१ ॥

प्रकीर्त्यते परं प्राज्ञैः पञ्चाङ्कं विक्रमोर्वशी ।

अथ प्रेङ्खणम्—

गर्भावमर्शहीनं वा मुखनिर्वहणान्वितम् ॥ १२२ ॥

सूत्रधारविहीनं च सर्ववृत्तिसमन्वितम्[3] ।
नियुद्धस्फेटयुतं परिवर्तकभूषितम् ॥ १२३ ॥

मागधी शौरसेनी वा हीननायकचेष्टितम् ।
नेपथ्ये गीतनाट्यं[4] च तथा तत्र प्ररोचना[5] ॥ १२४ ॥

अप्रवेशकविष्कम्भमेकाङ्कं प्रेङ्खणं विदुः ।
निदर्शनमिह ज्ञेयं वस्तु वालिवधादिकम् ॥ १२५ ॥

---

1. वञ्चितः T1. also Ad. 2. as adapted from Ad. मदनलेखा A2.Ad मदनरेखा T. 3. समाश्रितम् Ad. 4. as adapted from Ad. नेपथ्य नाट्यगीतं च. 5. परत्रैव प्रयोजनम् Ad.

अथ गोष्ठी—

अथ गोष्ठी मतैकाङ्का कैशिकीवृत्तिशालिनी ।
कामशृङ्गारसंयुक्ता पञ्चषड्योषिदन्विता ॥ १२६ ॥

[1]प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलङ्कृता ।
गर्भावमर्शसन्धिभ्यां [2]शून्या नोदात्तवाक्कृता ॥ १२७ ॥

निदर्शनं रैवतमदनिकाख्यमिहोदितम् ।

अथ भाणिका—

अथ स्याद्भाणिकोदात्तनायिकैकाङ्कभूषिता ॥ १२८ ॥

श्लक्ष्णनेपथ्यभाङ्मध्यपुरुषा च प्रकीर्तिता ।
कैशिकीभारतीप्राया त्वङ्गैः सप्तभिरुज्ज्वला ॥ १२९ ॥

उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा ।
समर्पणं चानुवृत्तिः[3] संहारश्चापि सप्तमः ॥ १३० ॥

प्रसङ्गात्कार्यकथनमुपन्यासः प्रकीर्तितः ।
निर्वेदवाक्यव्युत्पत्तिस्तत्र विन्यास उच्यते ॥ १३१ ॥

विबोधो भ्रान्तिनाशः स्यान्मिथ्याज्ञानं तु साध्वसम् ।
समर्पणमुपालम्भवचः स्यात्कोपविद्धया ॥ १३२ ॥

अनुवृत्तिर्निदर्शनस्योपन्यासः प्रकीर्तितः ।
समापनं तु कार्यस्य संहार इति कीर्तितः ॥ १३३ ॥

मुखनिर्वहणोपेता कामदत्ता निदर्शनम् ।

अथ संलापः[4]—

[5]शृङ्गारहास्यरहितः संलाप इति कीर्तितः ॥ १३४ ॥

---

1. प्रकृतैः T1. 2. हीनदात्त T1. 3. निवृत्तिश्च T1. 4. संलापकः T.
5. omit fully in T. adapted from Ad.

पुरोपरोधसङ्ग्रामविद्रवैः कपटैर्युतः ।
कैशिकीभारतीहीनो भवेत्पाषण्डनायकः ॥ १३५ ॥

हीनोपनायकयुतः श्मशानादिसमाकुलः ।
सप्तविंशतिरङ्गानि भवन्त्यस्य यथोच्यते ॥ १३६ ॥

उत्कण्ठा चावहित्था च प्रयत्नो [1]ग्रथनं तथा ।
आशंसा तर्कसंदेहतापोद्वेगाश्च मुग्धता ॥ १३७ ॥

आलस्यं प्रतिपत्तिश्च विलापो वाक्यमेव च ।
साधनानुगमोच्छ्वासविस्मयाश्च चमत्कृतिः ॥ १३८ ॥

विस्मृतिर्लोभसम्फेटौ वैशारद्यं प्रबोधनम् ।
आश्वासश्च प्रहर्षश्च प्रसत्तिरिति कीर्तिता[2]: ॥ १३९ ॥

सलक्षणोदाहरणं व्यक्तत्वान्नात्र दर्शितम् ।
शेषं नाटकवत्सर्वं संलापः समुदाहृतः[4] ॥ १४० ॥

निदर्शनं कनकवतीमाधवं समवेक्ष्यताम् ।

अथ प्रस्थानम्—

दासादिनायकं दासीनायिकं द्व्यङ्कमीरितम् ॥ १४१ ॥

कैशिकीवृत्तिबहुलं बहुताललयान्वितम् ।
सुरापानसमायुक्तं तथा हीनोपनायकम् ॥ १४२ ॥

विलासोद्दिष्टसंक्षिप्तं[5] प्रस्थानमिति कीर्तितम् ।
निदर्शनमिह ज्ञेयं शृङ्गारतिलकाह्वयम् ॥ १४३ ॥

अथ काव्यम्—

काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम् ।
गर्भावमर्शसन्धिभ्यां हीनं शृङ्गार[6]भूषितम् ॥ १४४ ॥

---

1. as adapted from Ad. निधनं T. 2. कीर्तितः Ad. 3. as adapted from Ad. शेषे T. 4. संलापकः उदाहृतः T. 5. संयुक्तं Ad. 6. भाषितम् T. भूषितम् Ad.

खण्डमात्राद्विपदिकाभग्नतालैरलङ्कृतम् ।
उदात्तोक्तिसमायुक्तं बहुतालल्यान्वितम् ॥ १४५ ॥

निदर्शनं तु काव्यस्य विज्ञेयो यादवोदयः[1] ।

अथ हल्लीसकम्—

हल्लीसकं तु सप्ताष्टदशस्त्रीजनसङ्कुलम् ॥ १४६ ॥

संप्रयोज्यैकपुरुषं कैशिकीवृत्तिभूषितम् ।
एकाङ्कं स्यादुदात्तोक्तिबहुतालल्यात्मकम्[2] ॥ १४७ ॥

निदर्शनं भवेदस्य केलिरैवतकं मतम् ।

अथ रासकम्—

अथ रासकमेकाङ्कं सूत्रधारेण वर्जितम् ॥ १४८ ॥

सुश्लिष्टनान्दीसहितं पञ्चपात्रं द्विसान्धकम् ।
पूर्णं भाषाविभूषाद्यैर्भारतीकैशिकीयुतम् ॥ १४९ ॥

वीथ्यङ्गमण्डितं [3]मुख्यनायकं ख्यातनायकम् ।
उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम् ॥ १५० ॥

गर्भावमर्शशून्यं च यथा स्यान्मेनकाद्विजम्[4] ।

अथ श्रीगदितम्—

करुणं स्त्री समासीना गायेद्यत्र पठेदपि ॥ १५१ ॥

एकाङ्कं भारतीप्रायं तच्छ्रीगदितमुच्यते ।
गर्भावमर्शरहितं प्रख्यातोदात्तनायकम् ॥ १५२ ॥

प्रसिद्धनयाकं ज्ञेयं यद्वत्क्रीडारसालकम्[5] ।

---

1. माधवोदयः Ad. 2. लयान्वितम् Ad. 3. as adapted from Ad. मूर्ख T. 4. मेनकाहितम् T1. 5. as adapted from Ad. रसातलम् T.

अथ लासिका—

शृङ्गारबहुलैकाङ्का त्रिसन्धिर्न्यूननायिका ॥ १५३ ॥

स्वल्पनृत्ताल्पनेपथ्या पीठमर्देन भूषिता ।
विदूषकविटोपेता दशलास्याङ्गभूषिता ॥ १५४ ॥

लासिका सा समुद्दिष्टा यथा वीणावती मता ।

अथ दुर्मल्ली—

दुर्मल्ली चतुरङ्का स्यात्कैशिकीभारतीयुता ॥ १५५ ॥

विगर्भा नागरनरा न्यूननायकभूषिता ।
त्रिनाडिः [1]प्रथमोऽङ्कोऽस्यां विटक्रीडामयो भवेत् ॥ १५६ ॥

द्वितीयः पञ्चनाडिः स्यात् विदूषकविलासवान् ।
षण्णाडिस्तृतीयः [2]स्यात्पीठमर्दविलासवान् ॥ १५७ ॥

चतुर्थो दशनाडिः स्यादङ्कः क्रीडितनागरः ।
निदर्शनं भवेदत्र यथा बिन्दुमती मता ॥ १५८ ॥

अथ नाट्यरासकम्—

नाट्यरासकमेकाङ्कं बहुताललयात्मकम् ।
हास्यशृङ्गारसंयुक्तं दशलास्याङ्गभूषितम् ॥ १५९ ॥

उदात्तनायकं चैव पीठमर्दोपनायकम् ।
द्वितीयसन्धिशून्यं स्याद्वासकसज्जात्र नायिका ॥ १६० ॥

निदर्शनं दर्शनीयं स्याद्विलासवती यथा ।

अथ उल्लाप्यम्—

उल्लाप्यं दिव्यचरितं मुखनिर्वहणान्वितम् ॥ १६१ ॥

---

1. प्रथमाङ्कः स्यात् Ad. 2. तृतीयस्तु Ad.

शृङ्गारहास्य[1]कारुण्ययुतमेकाङ्कभूषितम् ।
बहुपुस्तं गीतमयं चतुरोज्ज्वलनायकम् ॥ १६२ ॥

....................................

.................................... ।

नाट्यप्रबन्धनिकुरुम्बमिदं विभाति
दानं त्वदीयमिव मन्मधरातलेन्द्र ! ॥ १६३ ॥

**[2]इत्यमृतानन्दयोगीन्द्रविरचितेऽलङ्कारसङ्ग्रहे रूपकनिरूपणं नाम नवमः परिच्छेदः ॥**

---

1. as adapted from Ad. करुण T. 2. इति श्रीमदमृतानन्दयोगिप्रवर Ad.

## दशमः परिच्छेदः

अथ नाट्यालङ्काराः–

सिद्धिः प्राप्तिर्विचारश्चानुनयस्तदनन्तरम् ।
उद्दिष्टमपि दाक्षिण्यं प्रसिद्धिर्गर्हणं यथा ॥ १ ॥

पश्चात्तापस्पृहाक्षोभाऽऽक्रन्दाः[1] परिहृतिस्तथा ।
नीतिरुत्तेजनं शोभाऽभिमानः संशयस्तथा ॥ २ ॥

तुल्यतर्कोऽक्षमा चैवाऽध्यवसायो[2] विमर्शनम् ।
युक्तिः प्रोत्साहनं चैव साहाय्यं च निवेदनम् ॥ ३ ॥

अभिज्ञानं च पृच्छा चातिशयो गुणकीर्तनम् ।
[3]इति त्रिंशदलङ्काराः प्रायो नाट्येषु सङ्गताः ॥ ४ ॥

सिद्धिरिष्टार्थसंसिद्धेरनेकेषामुदाहृतिः[4] ।

यथा—

"हे भूतधात्रि ! यदि तावदहं विशुद्धा
तन्मे वरं त्वमिह देहि वृणो वरं च ।
हे विष्णुवासवमहेश्वरचन्द्रसूर्या !
जन्मान्तरेषु भविता प्रभुरेव रामः ॥ "

प्राप्तिः सा समुदायस्य ज्ञानं यच्चैकदेशतः ॥ ५ ॥

यथा—

"हंस ! प्रयच्छ मे कान्तां गतिस्तस्या हृता त्वया ।
सम्भावितैकदेशेन स्तेयं यदभियुज्यते ॥ "

विचारः स हि विज्ञेयः संशये निर्णयस्तु यः ।

यथा—

---

1. पश्चात्तापः स्पृहा क्षोभ आक्रन्दः परिहारकम् Ad. 2. चैव व्यवसायो Ad.
3. विषयोऽयं नाट्यशास्त्रे षोडशाध्याये विस्तरेणोपवर्णितः, निर्णयसागरमुद्रितपुस्तके १६९ तमेपृष्टे द्रष्टव्यः । as noted by the Ed. Ad. 4. हृतम् Ad.

“ असंशयं क्षत्रपरिग्रहक्षमा
 यदार्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु
 प्रमाणमन्तः करणप्रवृत्तयः ॥ ”

वचसा कर्मणा प्रीतिर्यस्मिन्ननुनयो हि सः ॥ ६ ॥

यथा—

“ परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्ररशना चोर्वी सखी च यूवयोरियम् ॥ ”

उद्दिष्टं स्यात्परोक्षे च प्रत्यक्षे चार्थकीर्तनम्

परोक्षे यथा—

“ तस्मिन् जीवति दुर्धर्षे हतमप्यहतंबलम् ।
[1]तस्मिंस्तु गमितप्राणे जीवन्तोऽपि मृता वयम् ॥ ”

प्रत्यक्षे यथा—

“ हा ! धिक् ! प्रियतमा सेयं दुःसंस्थानमलीमसा ।
सर्वथा प्रत्यभिज्ञेया मूर्तीभवति तद्यथा ॥ ”

दाक्षिण्यं श्लक्ष्णया वाचा परचित्तानुवर्तनम् ॥ ७ ॥

यथा—

“ प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषण ! ।
आर्येणानुगृहीतस्य[2] न विघ्नः सिद्धिमन्तरा ॥ ”

प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम् ।

यथा—

“ सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामूर्वश्या च भुवा च यः ॥ ”

---

1. as adapted from Ad. 2. गृहीतोऽसि निर्विघ्नः. 3. as adapted from Ad. 4. as adapted from Ad.

[1]तद् गर्हणं भवेद्यत्तु दोषोद्भेदेन कृत्सनम् ॥ ८ ॥

यथा—

“ अन्यासक्तमवध्यं च निघ्नन् क्षात्रपराङ्मुखः ।
न कथं लक्ष्मणो धन्वी लज्जते हृदयादपि ॥ ”

पश्चात्तापोऽनुतापस्तु कृत्वाकार्यं च योजयेत्[2] ।

“ [3]प्लवगप्रवरं निघ्नन् भ्रातृयुद्धाभियोगिनम् ।
अहं सूर्यकुलस्यस्याऽद्य कलङ्कं किं कृतं मया ॥ ”

स्पृहा यस्त्वभिलाषः स्याद्वस्तुनो [4]रामणीयके ॥ ९ ॥

यथा—

“ जीवत्सु तातपादेषु नवे दारपरिग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ ”

अधिक्षेपवचोयुक्तः कोपजः क्षोभ उच्यते ।

यथा—

“ त्वया तपस्वि चण्डाल ! प्रच्छन्नवधवर्तिनः ।
न केवलं हतो वाली स्वात्मा च परलोकतः ॥ ”

शोकप्रलाप आक्रन्दो नाट्यविद्भिरुदीरितः ॥ १० ॥

यथा—

“ हा विधे ! नष्टपक्षेण मय्येव परिवर्तसे ।
हतस्तातो [illegible] पत्नी भ्राता [5]च निहतो युधि ॥ ”

परिहारः स विज्ञेयः कृतानुचितमार्जनम्[6] ।

यथा—

“ प्राणप्रयाणदुःखार्त उक्तवानस्म्यन[7]क्षरम् ।
तत् क्षमस्व विभो ! किंच सुग्रीवस्ते समर्पितः ॥ ”

---

1. as adapted from Ad. 2. तुयोभवेत् Ad. 3. मातृकायां पदमिदं विलुप्तम् । तथाप्यौचित्या दुसीय संयोजितम् । Ed. Ad. 4. as adapted from Ad. रामणीयकम् T. 5. [illegible] adapted from Ad. 6. आर्जिनम् T1. 7. उक्तवानत्यनक्षरम् T1.

न्यायानुवृत्तिरेकत्व[1] नीतिरित्युच्यते यथा ॥ ११ ॥

"स्नेहं प्रति न पुत्रेषु विशेषः कश्चिदस्ति मे ।
किं तु न्यायं पुरस्कृत्य मया ज्येष्ठोऽभिषिच्यते ॥"

उत्तेजनं तु कार्यार्थं यत्रानक्षरमुच्यते ।

यथा—

"इन्द्रजिच्चण्डवीर्योऽसि नाम्नैव बलवानसि ।
धिक्[2] ! धिक् ! प्रच्छन्नरूपेण युध्यसेऽसद्भयाकुलः ॥"

सिद्धैः पदं समं श्लिष्टं साध्यं शोभाऽभिधीयते ॥ १२ ॥

यथा—

"सद्वंशसम्भवः शुद्धः [3]कोटिदोऽपि गुणान्वितः ।
कामं धनुरिव क्रूरो वर्जनीयः सतां प्रभुः ॥"

अभिमानोऽपरित्यागः दर्पदुःखसुखस्य च ।

यथा—

"खरेन्द्रजिद्दूषणकुम्भकर्णा
गताः किमेतेन गता गतास्ते ।
अहं च गच्छामि यदि प्रणाशं
तथाऽपि [4]सीतां न समर्पयामि[5] ॥"

अनिश्चयेन वाक्येन समाप्तिः संशयो यथा ॥ १३ ॥

"इयं स्वर्गाधिनाथस्य लक्ष्मीः किं यक्षकन्यका ।
अथ वा[6] विपिनस्यैव देवता किमु पार्वती ॥"

स्यादुत्प्रेक्षादिसम्पन्नस्तुल्यतर्कस्तु तद्यथा ।

---

1. रेवात्र T1. 2. तं प्रच्छन्नः स्वरूपेण युध्यतेऽस्माद्भयाकुलः T1; 2क: Ad. 3. कुटिलोऽपि T. 4. पीडां T1. 5. as adapted from Ad. न मर्षे T. 6. कि चास्य विषयस्यैव T1.

यथा—

“ तरङ्गभ्रूलतापेनं दुकूलमिव बिभ्रती ।
मन्ये परिणता सेयं सरिद्भावेन भामिनी ॥ ”

अक्षमा त्वहितानां या परिभूतिर्न सह्यते ॥ १४ ॥

यथा—

“ सीताहरणदुर्वृत्तपरिपाकफलोन्मुखः ।
स्वकुलस्यान्तकः स त्वमाशराग्रे[1] भवामि ते ॥ ”

[2]कार्याद्यध्यवसायो [3]यस्तन्निश्चयपरं वचः ।

यथा—

“ कियन्मात्रमकूपारः कियन्मात्रं च सा पुरी ।
कियन्मात्रं दशास्योऽपि [4]क्रुद्धस्य मम धन्विनः ॥ ”

विमर्शो दुःखदीनानामनिष्टफलनिश्चयः ॥ १५ ॥

यथा—

“ विद्वान् प्रणाशं समरे स्वयं च
न तावदात्मानमहं ब्रवीमि ।
महामुनेर्विश्रवसः कुलेऽस्मिन्[5]
निर्वापबीजं किमपीह[6] न स्यात् ॥ ”

अवधारणमर्थस्य केनचिद्युक्तिरिष्यते ।

यथा—

“ यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।

1. शरासे T1. 2. as adapted from Ad. कार्येष्वध्यव T. 3. as adapted from Ad. यस्तुलनागर्भितं T. 4. as adapted from Ad. क्रूरस्य T. 5. as adapted from Ad. विश्ववसस्तपोभिः T. 6. as adapted from Ad. यदि नः कुलम् T.

भय मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम्[1] ॥ ”

प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ॥ १६ ॥

यथा—

“ कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि ।
तज्जगत्त्रितयं [2]त्रातुं [3]तात ! ताडय ताटकाम् ॥ ”

सहाय्यमानुकूल्येन कार्ये कस्याऽपि योजनम् ।

यथा—

“ रन्ध्राणि तु सजातीयो दुर्लक्षाण्यपि पश्यति ।
इन्द्रजिन्निधनं नाथ ! लक्ष्मणानुचरे मयि ॥ ”

भूतस्य कथनं भाविसूचनाय निवेदनम् ॥ १७ ॥

यथा—

“ वानरः क्षत्रियः कोऽपि शत्रुः क्षुद्रो न गण्यताम् ।
वालिनं कार्तवीर्यं च स कथं विस्मृतो भवान् ? ॥ ”

अभिज्ञानं यदुद्भेदः पूर्वदृष्टस्य केनचित् ।

“ आकृतेः किञ्चिदुल्लेखो विभावयति लक्षणम् ।
महतोपप्लवेनेव पीडितं चन्द्रमण्डलम् ॥ ”

पृच्छान्वेषणमर्थस्य स्यादर्थाभ्यर्थनापरम् ॥ १८ ॥

यथा—

“ भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू-
रिहास्ते [4]दृष्टादृष्टा वा विदितमथवा स्याः किमु भवेत् ।
वयोऽवस्थां तस्याः शृणुत सुभगो यत्र मदनः
प्रगल्भव्यापारश्चरति हृदि मुग्धश्च वपुषि ॥ ”

1. as adapted from Ad. कुरुध्वे T. 2. as adapted from Ad. यातु T.
3. as adapted from Ad. भेदं T. 4. as adapted from Ad. रिहस्यैर्दृष्टा T.

गुणमेकस्य सङ्कीर्त्य तस्यातिशयवर्णनम् ।
क्रियते यत्र वाक्यार्थः स स्यादतिशयो यथा ॥ १९ ॥

यथा—

" विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम् ।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥ "

इष्टसिद्धौ गुणानां तु कीर्तनं गुणकीर्तनम् ।

यथा—

" शिरोऽर्चितशिवः शौर्यवशीकृतजगत्त्रयः ।
सुरस्त्रीदुर्लभः सोऽहं मनस्वी च दशाननः ॥ "

नानाविधैरलङ्कारैर्नाट्यविद्या विभूषिता ।
मोदाय भवतो भूयान्मनसो मन्मभूपते[1] ॥ २० ॥

[2]इत्यमृतानन्दयोगीन्द्रविरचितेऽलङ्कारसङ्ग्रहे नाट्यालङ्कारनिरूपणं नाम दशमः परिच्छेदः ॥

1. मोदाय कल्पतां नित्यं भवतो मन्मभूपते A2. Ad. 2. इति श्रीमदमृतानन्दयोगिप्रवर Ad.

## *एकादशः परिच्छेदः

अथ चाटुप्रबन्धानां लक्षणं कथ्यतेऽधुना ।

मुक्तकादिविभागः—

मुक्तकं पद्यमेकं स्याद्द्विकं पद्यद्वयं मतम् ॥ १ ॥

त्रिकं त्रयेण पद्यानां पञ्चरत्नानि पञ्चकम् ।
अष्टकं गजमाला स्यान्नवकं रत्नमालिका ॥ २ ॥

[1]दशभिर्दशकंप्रोक्तं द्वादशेन्दुकला मता ।
सप्तविंशति पद्यानि नाम्ना तारावली मता ॥ ३ ॥

त्रिंशता त्रिंशिका पञ्चाशता पञ्चाशिकेष्यते ।
शतेन शतकं प्रोक्तमष्टोत्तरशतं परम् ॥ ४ ॥

वृत्तैरभिन्नैर्भिन्नैर्वा कार्यमेकं यथारुचि[2] ।
काव्यमप्येकसर्गादि द्वात्रिंशदवधिस्मृतम् ॥ ५ ॥

अथोदाहरणादीनां[3] लक्षणं कथ्यतेऽधुना ।
कल्पनीयानि पद्यानि सप्त सप्तविभक्तिभिः ॥ ६ ॥

सम्बोधनात्मिका चान्ते विभक्तेष्वष्टमी भवेत् ।
शक्करीप्रभृतीनि स्युश्छन्दांस्यस्य यथारुचि ॥ ७ ॥

रीतिः प्रधाना गौडीया गतिः स्याद्द्रुतमध्यमा ।
ओजः प्रसाधनाशब्दाः सानुप्रासाः क्वचित्क्वचित् ॥ ८ ॥

विभक्तिघटना चात्र यथाकामं क्रमेण वा ।
तत्राद्यं मालिनीवृत्तं जयेत्यादिसमन्वितम् ॥ ९ ॥

गद्यात्मकदलान्यष्टौ प्रत्येकं सयतीनि च ।

---

* This pariccheda in T. is completely currupt. Fully adapted with corrections from Ad. 1. as adapted from Ad. नामावलीद्वादशं स्वच्छो. T. 2. as adapted from Ad. वृत्तैरभिन्नैर्वाकार्यमेकं T. 3. as adapted from Ad. णायास्तु T.

ततः सन्कलिका कार्या समस्ताब्धिपदात्मिका ।
अन्ते तूत्कलिका कार्या समस्तैकपदात्मिका[1] ॥ १० ॥

अन्ते पद्यसमायुक्ता यत्यनुप्रासशोभिनी ।
चतुरुत्कलिकास्याद्वा विभक्त्याभासलाञ्छिता ॥ ११ ॥

कलिकोत्कलिकामृष्टनव्यतालल्यक्रमा[2] ।
प्रतिपद्यं भवेन्नेतृनाम तत्तद्विभक्तिमत् ॥ १२ ॥

विराजन्ती कीर्तिमती सुभागा भोगमालिनी ।
कलावती कान्तिमती कमला जयवत्यपि ॥ १३ ॥

एता विभक्त्यधिष्टात्र्यो देवताः कथिता बुधैः ।
ददत्येताः स्तुतिप्रीताः स्वस्वनामसमं फलम् ॥ १४ ॥

वाक्यमेकं च कर्तव्यमन्ते सर्वविभक्तिकम् ।
आर्यां वान्यतमं कुर्यात् कविश्रुत्याख्यया ततः ॥ १५ ॥

अप्राकृता प्राकृता वा प्राकृतोन्मिश्रितापि वा ।
देशीभिश्च पदैर्युक्ता भाषाणां चैव सङ्करैः ॥ १६ ॥

वंशवीर्यश्रुताद्यैश्च युक्तोदाहरणं मतम् ।
अमुष्य नायकाः प्रोक्ता देवा दैत्या महीसुराः ॥ १७ ॥

गुरवः क्षोणिपालाश्च सामन्ताः सचिवादयः ।
विभक्तिसप्तकयुता सन्ध्या चैव विना कृता ॥ १८ ॥

अङ्गुलीति समाख्याता सद्भिश्चाटु विशारदैः ।
केवलं कलिकासञ्ज्ञात्कल्याणीति निगद्यते ॥ १९ ॥

केवलोत्कलिकासञ्ज्ञादुत्फुल्लकवती भवेत् ।
यस्यास्तूत्कलिकास्थाने केवलार्या प्रयुज्यते ॥ २० ॥

---

1. as adapted from Ad. लयान्विताः T. 2. as adapted from Ad युक्ता यत्यनुप्रासशोभिनी. T.

सा फलोदाहरणं वास्यादार्यासङ्गान्न भिद्यते ।
केवला प्रथमा वाणी द्वितीया केवला झरी ॥ २१ ॥

तृतीया केवला वापी चतुर्थी केवला फणी ।
पञ्चमीं केवला सारी षष्ठी मोरीति कथ्यते ॥ २२ ॥

सप्तमी खलिका प्रोक्ता सम्बुद्धिः सरसावती ।
भिन्नैर्वर्णैर्भिन्ननाम सम्भावे च तथा भवेत् ॥ २३ ॥

सर्ववाक्यं च कर्तव्यं कविनायकलाञ्छितम् ।
एषैव गद्यरहिता नवमाणिक्यमालिका ॥ २४ ॥

एषैव च त्रिगुणिता भवेन्नक्षत्रमालिका ।
रसः शृङ्गार एव स्याद्भोगवल्याः प्रपञ्चने ॥ २५ ॥

अनुषङ्गेण मिलितो वीरोऽपि स्यात्क्वचित्क्वचित् ।
वर्णनीयाः क्रमात्साङ्गवीरभोगादयो गुणाः ॥ २६ ॥

आशीः पद्यसमायुक्ता प्रथमे विरतावपि ।
अष्टभिर्वा षोडशभिः विंशत्या वा पदैर्युता ॥ २७ ॥

दलानि षड्वा चत्वारि प्रत्येकं सयतीनि च ।
मध्ये भवेयुरथवा यमिताद्यक्षरैः क्वचित् ॥ २८ ॥

गतेरपि प्रयोगः स्याद्यथारीति समृद्धितः ।
तत्तदर्थावसानेऽस्य विरतिः स्यात्पदे पदे ॥ २९ ॥

देव त्वं जय वीर त्वं धीर जीवादिकं पदम् ।
तत्तत्स्थाने प्राकृतादिभाषाभिर्बिरुदाश्रितैः ॥ ३० ॥

भोगोपजृम्भितैर्गद्यपद्यैः सेयं सपल्लवैः ।
भोगावली च देशर्तुभावाङ्गज्ञानचातुरी ॥ ३१ ॥

वर्णयेद्वीरलब्धांश्च तांस्तान् श्लाघ्यादिकान् गुणान् ।
चतुर्भिर्लघुभिः पद्यप्रान्ते सम्मदकारिणी ॥ ३२ ॥

मङ्गलानि फलानि स्युः प्रथमश्रवणादपि ।
वृत्तेनैकेन नेतारं वर्धयेदाशिषाऽन्तिमे ॥ ३३ ॥

ग्रन्थसंख्या शतं षष्टिरत्र ख्यातोत्तमा बुधैः ।
भोगावलिसमायुक्ता देवानां भूभुजामपि ॥ ३४ ॥

वर्णनेन परं विद्यात् प्रायशो बिरुदावलीम् ।
द्वाभ्यां [1]वापि चतुर्भिर्वा पञ्चभिष्षड्भिरेव वा ॥ ३५ ॥

भाषाभिर्विहिताभिः स्याद्यदि वा देशभाषितैः ।
कुलक्रमागतैर्वापि स्वापदाननिदर्शकैः[2] ॥ ३६ ॥

पदैरपि च सा यैः स्यात्तत्तदर्थविनाकृतैः ।
नानापुरातनक्ष्माभृद्भिरुदारोहणैरपि ॥ ३७ ॥

वाहनारोहशस्त्रास्त्रप्रयोगैर्भोगवर्णनैः ।
गुणिनां वर्णनैश्चापि विनयक्रमशालिभिः ॥ ३८ ॥

गौडरीत्या विधातव्या सानुप्रासा सपल्लवा ।
आद्यन्तयोः स्यादार्या वा गाथा वा मङ्गलात्मिका ॥ ३९ ॥

इत्येवं लक्षणानि स्युर्लक्षणानीतराणि वा ।
सद्गुणारोपणं यत्र नेतुः सैव गुणावली ॥ ४० ॥

गुणाः परोपकारार्था वर्ण्याः सर्वे भवान्ततः ।
दलानि चाष्टौ चत्वारि सानुप्रासयतीनि च ॥ ४१ ॥

मात्राभिरथवा वर्णैः समानि स्युः परस्य च ।
तादृग्वर्णानि सर्वाणि संस्कृतेन क्वचित्क्वचित् ॥ ४२ ॥

---

1. चतसृभिर्वापि Ad. 2. as adapted from Ad. पदैरपि T.

अस्याः शृङ्गार एकः स्यात् क्वचित्तत्राद्भुतो रसः ।
दलपङ्क्तिविरामेषु देवेत्यादिपदं न्यसेत् ॥ ४३ ॥

आदौ समासभूयिष्ठमन्ते स्याद्वृत्तगन्धि च ।
गद्याद्यपरमाद्यान्मध्ये हि पदमेव वा ॥ ४४ ॥

पुरे जनपदे रम्ये देशे या गुणसम्पदः ।
नेतारं वर्णयेत्ताभिरेषैव स्याद्गुणावली ॥ ४५ ॥

चतुस्रभिर्भवेत् षड्भिर्भाषाभिर्वि[1]लसत्क्रमम् ।
एकैकभाषयैकैकं पद्यं सर्वविभक्तिभिः ॥ ४६ ॥

रगलापि तथापि स्यात्तत्र तत्र सपल्लवा ।
श्लोकावाद्यन्तयोर्नेतृमङ्गलार्थौ न्यसेद् बुधः ॥ ४७ ॥

त्रिस्रभिर्वाथ वृत्तं चेद्भाषाभिर्मण्डलक्रमात् ।
उत्तमं चक्रवालं स्यादन्यूनानदधिकं मतम् ॥ ४८ ॥

रसादीन्वर्णयेद्भूतिर्गुणकर्मानुसारतः ।
युक्तमेतद्विशेषेणसिद्धिं च विजिगीषुभिः ॥ ४९ ॥

द्वात्रिंशद्गद्यसंयुक्तं गद्याग्रैः पल्लवैर्युतम् ।
चतुर्धा भिन्नरूपेण व्यस्तं सस्वरबन्धनम् ॥ ५० ॥

तालैर्द्वादशभिर्युक्तं लोकोत्तरमुदाहृतम् ।
[2]वेश्यः........परं....स........तः ॥ ५१ ॥

त्यागादयो गुणा यस्यामूह्यन्ते कविभिः कृतौ ।
पूर्वाद्यास्तासु तत्रत्यानाहूया........... ॥ ५२ ॥

---

1. विकसत् T. 2. अत्राक्षराणि मातृकायां भ्रष्टानि। as noted by Ed. Ad. and also T.

....................................................

........गद्यमेकं चतुर्भिः पल्लवैर्युतम् ॥ ५३ ॥

चतुर्भैष समावृत्तं चुतुरक्षरबन्धनम् ।
आशीराद्यन्योः कार्या नेतुः पद्यद्वयेन तु ॥ ५४ ॥

एवं पद्यैश्च गद्यैश्च सा भवेत्त्यागघोषणम् ।
अथ संख्या भवेत् षष्ठिः शतं वा स्याद्विशेषतः ॥ ५५ ॥

अस्यास्तु सर्वे नेतारो भवेयुस्त्यागिनो सदा ।
[1]पद्यं गद्यं च तालं च सानुतालं चतुर्विधम् ॥ ५६ ॥

देववीर जयेत्यादिसम्बुद्धिश्चान्त एव च ।
स्याच्चतुर्धा च वृत्तं स्याच्चतुर्भद्रमितीरितम् ॥ ५७ ॥

चाटुप्रबन्धैस्त्वयि चारुकीर्तिरुदारवर्णैरुपलाल्यमाना ।
रक्ता सती राजगुरो विचित्रं मन्मक्षमानाथ! मरालशुभ्र[2]! ॥५८॥

[3]इत्यमृतानन्दयोगीन्द्रविरचितेऽलङ्कारसङ्ग्रहे चाटुप्रबन्धलक्षणं
नामैकादशः परिच्छेदः ।

अलङ्कारसङ्ग्रहः सम्पूर्णः ।

शुभमस्तु

---

1. गद्यं पद्यं च Ad. 2. शुभ्रा Ad. 3. इति श्रीमदमृतानन्दयोगिप्रवर Ad

## APPENDIX I

# अलङ्कारसङ्ग्रहे उदाहृतश्लोकानां सूची

| श्लोकाः | ग्रन्थनाम | | अलं. स. पृष्ठम् |
|---|---|---|---|
| अ | | | |
| अकुण्ठोत्कण्ठ | *काव्यप्रकाशे, ७-२०७ | .... | ५७ |
| अकृते तु | | .... | ८४ |
| अक्षं विक्षिपति | महानाटकम्, ३-८१ | .... | ३८ |
| अङ्कुरत्कुच | | ... | २४ |
| अङ्कुरत्कुचमत्यनल्प | | .... | ११७ |
| अङ्गोपान्त | | .... | ३७ |
| अणिसं पि | | .... | १२२ |
| अणुमपि परकीयं | | .... | ४६ |
| अतिविततं | *काव्यप्रकाशे ७-२५५ | .... | ६५ |
| अत्रान्तरे | मालतीमाधवम् १-२९ | .... | ३२ |
| अखिलोचन | *काव्यप्रकाशे ७-१५८ | .... | ५५ |
| अद्यापि स्तनशैल | महानाटकम् २-७ | .... | ६२ |
| अद्यैव किं न विशसे | वेणीसंहारः ५-३२ | .... | ९४ |
| अधिकरतल | *काव्यप्रकाशे ७-२२३ | .... | ६० |
| अनङ्गमङ्गल | *काव्यप्रकाशे ७-१४१ | .... | ५२ |
| अनङ्गिता | काव्यादर्शः २-१०१ | .... | ४० |
| अनभ्यासेन | ,, २-२४७ | .... | ५० |
| अनुकूलजनो | | .... | २७ |
| अनुरागमङ्गनायाः | | .... | ८३ |
| अन्यासक्त | | .... | १३६ |
| अपराध | | .... | ८७ |
| अपि तुरग | रघुवंशः ९-६७ | .... | ४९ |

* This mark indicates that the stanza has been noted in the ork mentioned.

| श्लोकाः | ग्रन्थनाम | अलं. स. पृष्ठम् |
|---|---|---|
| संप्रहारे | | .... ७६ |
| सम्मार्जनी | | .... १३ |
| सकलरिपुजयाशा | वेणीसंहारम् ५-१७ | .... ११९ |
| सखि स विजितो | दशरूपकावलोके २-२५ | .... २८ |
| सदा स्नात्वा | *काव्यप्रकाशे ७-२६७ | .... ६७ |
| स देवतावेश्मनि | | .... ९७ |
| सद्वंशसंभवः | *साहित्यदर्पणे ६-१७६ | .... १३७ |
| सपंकतल | | .... ६६ |
| सभ्रूभंगं | | .... ३४ |
| समदुःख | | .... १२२ |
| सम्यक्ज्ञान | *काव्यप्रकाशे ७-१५५ | .... ५६ |
| सरसिजमनु | शाकुन्तलम् १-१७ | .... ३१ |
| सर्वः स्वजन | | .... ९९ |
| सर्वथेयं | | .... ८८ |
| सव्याजं तिलका | *धनिकस्य दशरूपकावलोके २-४१ | .... ३३ |
| सर्वाङ्गसंगत | | .... ९८ |
| सव्यापसव्य | | .... ५० |
| सव्याधजानिः | | .... ४७ |
| सव्रीडा दयितानने | *काव्याप्रकाशे ७-३२१ | .... ७६ |
| सव्याणं सखि | | .... ८८ |
| सह दीर्घा | काव्यादर्शः २-३५२ | .... ४६ |
| सात्वयैव | | |
| साधनं सुमहद् | *काव्यप्रकाशे ७-१२१ | .... ५४ |
| साधु दूति | | .... ४७ |
| सामिप्रफुल्ल | अमृतानन्दस्य | .... ११ |

## APPENDIX II

# अलङ्कारसङ्ग्रहकारिकार्धानामनुक्रमणी

ष



स

# APPENDIX III

## पाठशोधनानां सूची

| Page | Line | |
|---|---|---|
| १ | २ | अनियोग G2. Ad also. |
| ,, | ३ | विद्वज्जनमन:कान्तकैरवानन्द Ad. |
| ,, | ५ | उद्दामफलदामुर्वीमुर्वी Ad. |
| ,, | ७ | पुत्रश्चागमवित्समुद्र Gl. Ad. |
| ,, | ८ | मत्र Ad. |
| | | मन्त्र Gl. Ad. |
| ,, | ९ | सत्काव्यवित् सभामध्ये Gl. Ad. |
| ,, | १० | अवोचदमृतानन्द Gl. Ad. |
| | | अपृच्छदमृतानन्द A. Ad. |
| ,, | ११ | वर्णशुद्धि वाक्यवृत्ति Ad. |
| ,, | १३ | नाट्यभेदान् Gl. Ad. |
| ,, | १३ | नाटकोप Gl. Ad. |
| ,, | १४ | संकीर्णस्तत्र Ad. |
| २ | १ | वाक्येनैव Gl. Ad. |
| ,, | [redacted] | वर्णास्तु Gl. Ad. |
| ,, | ५ | सुप्तिङन्तानां Ad. |
| ,, | ६ | सगुणानि च Ad. |
| | | सरसानि च Gl. Ad. |
| ,, | ७ | सर्वे विपश्चित: Gl. Ad. |
| ,, | ८ | मिश्रं तु Gl. Ad. |
| ,, | १० | गद्यपद्यात्मकं Ad. |
| ,, | १२ | तु Gl. Ad. |
| ,, | १५ | उच्छ्वासलम्बकाद्याढ्यं Ad. |
| ,, | १५ | द्वयम् Ad. |
| ,, | १६ | मङ्क्ष्वङ्कितं Ad. |
| ३ | ८ | गुरुलाघवम् Ad. |
| ,, | ९ | वर्णान् गणाश्च A. Ad. |
| ,, | १० | मपि [redacted] Ad. |
| ,, | १७ | लाभो [redacted] Ad. |

| Page | Line | |
|---|---|---|
| ३ | १८ | शोभाशोभकरौ M1. Ad. |
| '' | २० | भयसुख M1., M2. Ad. |
| ४ | ५ | सर्वदा A. Ad. |
| '' | '' | कविना G1. Ad. |
| '' | ८ | लक्षणं A. Ad. |
| '' | १० | नाभसस्तु G1. Ad. |
| '' | '' | सौख्यं G1. Ad. |
| '' | '' | शशिदैवतः G1. Ad. |
| '' | ११ | क्षयप्रदः Ad. |
| '' | १५ | इति G1. Ad. |
| '' | '' | सर्वदा M1. Ad. |
| '' | '' | इति M1., M2. Ad. |
| '' | १७ | रचितैः Ad. चरितैः M1. Ad. |
| '' | १८ | कौतूहलानि तव सन्तु वराङ्क भीम Ad. |
| '' | '' | कौतूहलेन विदुषां M1. Ad. |
| '' | १९ | श्रीमदमृतानन्द Ad. |
| '' | '' | योगिप्रवर Ad. |
| '' | '' | अमृतानन्दविरचिते A. Ad. |
| '' | '' | सर्वालङ्कारसंग्रहे A. Ad. |
| ५ | २ | कारण Ad. |
| '' | ३ | श्चार्थः Ad. |
| '' | '' | शिल्पको Ad. |
| '' | ४ | कविपुङ्गवो भूषार्थी A. Ad. |
| '' | ५ | आवापोद्वापकृत् G1. Ad. |
| '' | ७ | चित्रार्थः Ad. |
| '' | '' | द्वयचित्रकृत् M1. Ad. |
| '' | '' | शब्दचित्रकृत् Ad. |
| '' | १० | शब्दार्थकौतुकी A. Ad. |
| '' | ११ | निघ्नो Ad. |
| '' | '' | निष्ठो A. Ad. |
| '' | '' | निष्ठः M1. Ad. |
| '' | १२ | गद्यते A. Ad. |
| '' | '' | कोविदैः A. M1. Ad. |
| '' | १३ | सर्वशास्त्रावलोकनम् Ad. |

| Page | Line | |
|---|---|---|
| ” | ” | वलोकनात् M1., M2. Ad. |
| ” | १७ | सादेवता प्रसादाच्च Ad. |
| ” | ” | जातमप्यपहासाय कल्पते G1., M1., M2. Ad. |
| ६ | १२ | [redacted] Ad. |
| ” | ” | तत्रोदाहरणं A., M1., M2., Ad. |
| ” | १३ | साधनात् Ad. |
| ” | ” | लक्ष्यते A., M1., M2. Ad. |
| ” | १८ | व्यङ्ग्य Ad. |
| ” | १९ | यत्रावाच्यं Ad. |
| ” | ” | यत्र वाच्यं G2., M1., M2., Ad. |
| ” | २२ | लिङ्गमन्यशब्दस्य A. Ad. |
| ७ | ३ | हरिरित्यत्र योगा Ad. |
| ” | ४ | हरिरित्यत्र वियोगा Ad. |
| ” | ५ | दाशरथौ Ad. |
| ” | ” | दाशरथी M1. Ad. |
| ” | ” | मित्यर्थेन Ad. |
| ” | ” | युष्मदर्थः Ad. |
| ” | १० | रित्यन्य Ad. |
| ” | ” | शिवः Ad. |
| ” | ” | शिवे M1. Ad. |
| ” | ११ | मधावत्र Ad. |
| ” | ” | ध्वनत्यत्र M1., M2. Ad. |
| ” | १७ | व्यक्तै G1. Ad. |
| ” | १९ | नेत्रेति Ad. |
| ” | ” | ऽवगम्यते Ad. |
| ” | ” | विभाव्यते G1., M1. Ad. |
| ” | २० | स्तस्य Ad. |
| ८ | १ | प्रष्टात्र G1. Ad. |
| ” | २ | नोद्यमः Ad. |
| ” | ५ | रेषां Ad. |
| ” | ७ | पद्यकाव्यबन्धैः G1. Ad. |
| ” | ८ | समरनिरङ्कुश Ad. |
| ” | ९ | इति श्रीमदमृतानन्द Ad. |

| Page | Line | |
|---|---|---|
| ,, | ,, | योगिप्रवर Ad. |
| ,, | ,, | सर्वालङ्कारसंग्रहे A. Ad. |
| ९ | ६ | [illegible] Ad. |
| ,, | ७ | करुणरौद्र Ad. |
| ,, | ९ | कथ्यते G1. Ad. |
| ,, | १३ | रसादय: Ad. |
| ,, | १६ | द्दीपनत्वाद्विभावो द्विवधो मत: G1. Ad. |
| ,, | १७ | विभावा [illegible] Ad. |
| ,, | ,, | [illegible] Ad. |
| ,, | ,, | विभाव्यते M1. Ad. |
| ,, | ,, | व्यक्तिस्तु [illegible] M1. Ad. |
| ,, | १९ | भावैर्थस्त उद्दी Ad. |
| ,, | ,, | उद्दीपनो मत: G1. Ad. |
| १० | १ | [illegible] Ad. |
| ,, | ,, | विकारा Ad |
| ,, | ,, | प्रकीर्त्यन्ते G1. Ad. |
| ,, | ५ | अनेकार्था: M2. Ad. |
| ,, | ९ | मोहस्त्वमति Ad. |
| ,, | ११ | मारोप्यत्वादतत्वत: Ad. |
| ,, | १२ | स स्वभावरस: स्मृत: Ad. स्मृते: G1. Ad. |
| ,, | ,, | स्वस्वभावरस: M1., M2. Ad. |
| ,, | १३ | [illegible] रसा: M1., M2., A. Ad. |
| ,, | १८ | यथायोगं Ad. योग्यं M1. Ad. |
| ,, | १९ | विप्रलम्भश्च Ad. |
| ११ | २ | पुलकितै: Ad. |
| ,, | ३ | शीकरै: Ad. |
| ,, | ६ | वक्ष्यते Ad. |
| ,, | ,, | लक्ष्यते M1., M2. Ad. |
| ,, | ८ | चित्तासक्तिर्मनश्शङ्क M1. Ad. |
| ,, | ११ | यत्र Ad. |
| ,, | १४ | भावै: |
| ,, | १५ | मन्नभूप Ad. |
| ,, | १७ | मन्नभूप Ad. |

| Page | Line | |
|---|---|---|
| ,, | २० | तमश्च Ad. |
| १२ | २ | [redacted] Ad. |
| ,, | ५ | मन्त्र Ad. |
| ,, | ७ | वश्यं Ad. |
| ,, | ९ | भक्तीश Ad. |
| ,, | १० | [redacted] Ad. |
| ,, | १७ | [redacted] Ad. |
| ,, | ,, | मन्त्र Ad. |
| १३ | १ | मन्त्र Ad. |
| ,, | ७ | मन्त्र Ad. |
| ,, | ८ | आहुरिन्द्रिय Ad. |
| ,, | ,, | मुहुरिन्द्रिय M2. Ad. |
| ,, | १० | मन्त्र Ad. |
| ,, | ११ | विज्ञात Ad. |
| ,, | १७ | मन्त्र Ad. |
| ,, | १९ | हासरसे Ad. |
| ,, | २० | नाट्यपूर्ते Ad. |
| १४ | २ | वित्तस्य दानमिह Ad. |
| ,, | ३ | भावाकार Ad. |
| ,, | ४ | भावुकाक्षि Ad. |
| ,, | ६ | हर्षाश्रुपातादि भावाः Ad. |
| ,, | ८ | सञ्चारिणः स्मृताः M2. Ad. |
| ,, | १० | मध्यमे Ad. |
| ,, | ११ | शिरःकम्प्यपरं Ad. |
| ,, | १२ | अधमेऽत्रावहसितं Ad. |
| ,, | ,, | चापहसितं M2. Ad. |
| ,, | १५ | [redacted] [redacted] Ad. |
| ,, | १७ | करमर्पयेत्सुतं M1. Ad. |
| ,, | ,, | कथमर्पयेत्सुतो Ad. |
| १५ | १ | स्तुह्यमानो Ad. |
| ,, | ३ | निरागा [redacted] हा Ad. |
| ,, | १४ | संक्ष्णुवानः Ad. |
| ,, | १६ | सार्धं Ad. |

| Page | Line | |
|---|---|---|
| ,, | १७ | महमय Ad. |
| १६ | १ | स्मृताः Ad. मताः M2. Ad. |
| ,, | ८ | यत्रैव Ad. |
| ,, | ,, | तत्रैव P. Ad. |
| ,, | १३ | संत्रासमेनं Ad. |
| ,, | ,, | क्षुण्णशक्रेभकुंभाः Ad. |
| ,, | १४ | लज्जां विदधति यदमी M1. Ad. |
| ,, | ,, | गात्रेषु Ad. |
| ,, | ,, | संपतन्तः Ad. |
| ,, | १५ | रुषो Ad. |
| ,, | १८ | तूद्दीपकाः Ad. |
| ,, | ,, | उद्दीपनाः P. Ad. |
| ,, | २० | प्रसादाश्रुस्त्रसंग्रहाः Ad. |
| ,, | २२ | यथायोगः Ad. |
| १७ | ७ | स्युस्तत्र Ad. |
| ,, | ८ | यथा Ad. |
| ,, | ११ | जुगुप्सा P. Ad. |
| ,, | १२ | जुगुप्सा P. Ad. |
| ,, | १३ | वेङ्गक्षोणि Ad. |
| ,, | ,, | [illegible] P., M1. Ad. |
| ,, | ,, | वेङ्ग A. Ad. |
| ,, | १३ | निर्यासिताः A. Ad. |
| ,, | १४ | संविष्टाः Ad. |
| ,, | ,, | प्रतिपदं A. Ad. |
| ,, | १७ | चारभट Ad. |
| २४ | १० | कथयसि Ad. |
| ,, | ११ | चाटुकशतानि Ad. |
| ,, | १२ | प्रणिहितेतु करे Ad. |
| ,, | ,, | प्रणिहितश्च करः P., M1. Ad. |
| ,, | ,, | प्रणिहिते च u. Ad. |
| ,, | १३ | यदि u. Ad. |
| ,, | १५ | प्यस्ववशा Ad. |
| ,, | १७ | काञ्ची नितम्बानना Ad. |

| Page | Line | |
|---|---|---|
| ” | ” | [redacted] M1. Ad. |
| ” | २० | मध्या तु M1. Ad. |
| ” | २१ | [redacted] A. Ad. |
| ” | ” | [redacted] Ad. |
| २५ | ५ | दोषोऽस्मासु P. Ad. |
| ” | ९ | किमु तेन M2. Ad. |
| ” | ११ | ऽपि Ad. |
| ” | १४ | संस्थितिः P. Ad. |
| ” | १६ | व्याहार Ad. व्यापार M2. Ad. |
| ” | १९ | गति Ad. |
| ” | ” | [redacted] Ad. |
| २६ | १ | अङ्गं नार्पयति P. Ad. |
| ” | ” | हठालिङ्गने Ad. |
| ” | २ | कुतः Ad. |
| ” | [redacted] | प्रियायाः A. Ad. |
| ” | ८ | संतर्ज्य [redacted] Ad. |
| ” | १० | मोहनमन्दिरं Ad. |
| ” | १६ | बन्धच्छलः A., M1. Ad. |
| ” | १७ | सपुलकप्रेमो Ad. |
| ” | १८ | फलकां Ad. |
| ” | १९ | दयः A., u. Ad. |
| ” | २० | पतिकाद्या [redacted] Ad. |
| ” | ” | चाद्या A. Ad. |
| २७ | [redacted] | [redacted] न Ad. |
| ” | [redacted] | वपुषि वेपथुः M1. Ad. |
| ” | १० | तारहारा u. Ad. |
| ” | १५ | पुलये Ad. |
| ” | ” | [redacted]भूतः Ad. |
| ” | ” | विभूत A. Ad. |
| ” | ” | पुलयैः u. Ad. |
| ” | २० | The Daśarūpaka reads—यातः परमपि [redacted] । as mentioned in Fn. Ad. |
| २८ | २ | वा Ad. |

| Page | Line | |
|---|---|---|
| " | ४ | सारयित्वा Ad. |
| " | ७ | प्यमरास्त्रिया Ad. |
| " | " | आपरास्त्रिया M1. Ad. |
| " | ८ | ललित Ad. |
| " | ९ | शेफालीषु स्फुरत Ad. |
| " | " | स्खलत् M1. Ad. |
| " | १५ | शक्यो वरीतुम् Ad. |
| " | १६ | कामुकं Ad. |
| " | १७ | प्रशिथिल Ad. |
| " | " | प्रचलित P. Ad. |
| " | १८ | विरति Ad. |
| " | " | विगत M1. Ad. |
| " | १९ | वलयवलन u. Ad. |
| २९ | १ | प्रतिवेशिनी Ad. |
| " | " | प्रातिवेशिनी A. Ad. |
| " | ३, ४ | read after the śloka मात: [illegible] u. Ad. omits the same |
| " | १० | मित्येते Ad. |
| " | " | सप्ता यत्नसमुद्भवा: Ad. |
| " | " | सप्तालंकृतयो मता: P. Ad. |
| " | १५ | तस्याद्य Ad. |
| " | १६ | सा ललितां Ad. |
| " | १९ | यौवनशैशव Ad. |
| " | " | वृष्टघ्यमाना Ad. |
| ३० | ५ | [illegible] Ad. |
| " | ६ | मिवारुण Ad. |
| " | ७ | अलसविलुतापाङ्गं Ad. |
| " | " | अलसवलितामपाङ्गैः A., u. Ad. |
| " | १० | व्यलम्बन्त Ad. |
| " | १३ | कान्तिनिखिडा M2. Ad. |
| " | १४ | विसरैस्तूर्णं u. Ad. |
| " | १५ | हस्तप्रभा Ad. |
| " | " | प्रभाभिर्हतम् u. Ad. |
| " | १७ | दप्रप्ताङ्गसुख Ad. |

| Page | Line | |
|---|---|---|
| ,, | ,, | अप्राप्ताभिमुखं P. Ad. |
| ,, | १९ | वनतरुवरवीथीवर्त्म Ad. |
| ,, | ,, | वरवारीवर्ति. P. Ad. |
| ३१ | १ | विरम Ad. |
| ,, | ३ | वस्तुनो योगे Ad. |
| ,, | ७ | किमिह च P. Ad. |
| ,, | १० | कलाप्रागल्भ्यचातुर्यसभा Ad. |
| ,, | ,, | कलाप्रागल्भ्यचातुर्ये u. Ad. |
| ,, | ११ | च [illegible] Ad. |
| ,, | १५ | ददर्श P. Ad. |
| ,, | १६ | अचापल Ad. |
| ,, | २० | नत्वेवायं Ad. |
| ३२ | ९ | विजयि Ad. |
| ,, | १० | काले Ad. |
| ,, | ,, | कार्ये P. Ad. |
| ,, | ,, | कारे u. Ad. |
| ,, | १५ | कान्ते P. Ad. |
| ३३ | १ | भङ्गासौ Ad. |
| ,, | ,, | विलक्षार्थरुदितं Ad. |
| ,, | ४ | तत्त्वावेशेन चेतसा Ad. |
| ,, | ५ | अवशेव A. Ad. |
| ,, | [illegible] | वदति Ad. |
| ,, | ,, | हरति P. Ad. |
| ,, | ,, | विनत Ad. |
| ,, | ११ | रम्भाद्यैः Ad. |
| ,, | १७ | तिलकालकानविरलं Ad. |
| ,, | ,, | लोलाङ्गुलीभिः स्पृशन् Ad. |
| ,, | १८ | [illegible] चोराञ्चलम् Ad. |
| ,, | ,, | चीनाञ्चलम् P., u. Ad. |
| ,, | १९ | आलोकितस्तद् Ad. |
| ,, | २० | कान्तः Ad. |
| ३४ | १ | सुकुमाराङ्ग Ad. |
| ,, | [illegible] | स्वैरयाते Ad. |

| Page | Line | |
|---|---|---|
| ” | १२ | सन्तु Ad. |
| ” | ” | सन्ति P. Ad. |
| ” | १३ | तोण्डनिर्यङ्कुरसत्वमेकतो Ad. |
| ” | ” | तोण्डनिर्याङ्कुरि A. Ad. |
| ” | ” | मश्र Ad. |
| ” | ” | मप्प P. Ad. |
| ” | १४ | इति श्रीमदमृतायोशिप्रवर Ad. |
| ” | ” | [redacted] Ad. |
| ३५ | ५ | क्षर: A. Ad. |
| ” | ६ | प्रसन्नैर्यत्रार्थ: Ad. |
| ” | १६ | एतैस्तु मिश्रा P. Ad. |
| ” | १७ | द्वित्रिपद M2. Ad. |
| ” | १८ | [redacted] A. Ad. |
| ३६ | १ | [redacted] Ad. |
| ” | ४ | तारतारम् P. Ad. |
| ” | १८ | संयुक्त Ad. |
| ” | २२ | [redacted] Ad. |
| ३७ | ३ | प्रसाद: परिकीर्तित: Ad. |
| ” | ४ | यार्गं Ad. |
| ” | ” | पृथक् पृथक् Ad. |
| ” | ” | क्वचित्क्वचित् A., u. Ad. |
| ” | ८ | योत्प्रेक्षे Ad. |
| ” | १० | श्लिष्ट Ad. |
| ” | १५ | [redacted] Ad. |
| ” | १६ | रसातिरेक M1. Ad. |
| ” | १७ | गुरुन् Ad. |
| ” | १८ | न: Ad. |
| ” | ” | व: P., u. Ad. |
| ” | १९ | भेदात् A., u. Ad. |
| ३८ | ४ | पटीरचिता Ad. |
| ” | ७ | [redacted] Ad. |
| ” | ९ | मम्बु Ad. |
| ” | ११ | पुण्याम्बुपूर्ण M1. Ad. |

| Page | Line | |
|---|---|---|
| " | १२ | नीराजना निजकटाक्ष Ad. |
| " | १५ | युगं Ad. |
| " | १८ | ज्वलति न्याहृत् |
| ३९ | १ | आवृतिः संमता u. Ad. |
| " | ५ | दिकात्मनाम् Ad. |
| " | " | धर्मदिकात्मनाम् A. Ad. |
| " | ६ | बाले फाले Ad. |
| " | १४ | सादृश्यं Ad. |
| " | " | सादृश्यं यत्र A1. Ad. |
| " | १७ | प्रथः A., G1. Ad. |
| " | १९ | भीतात्वात् Ad. |
| " | " | तत्परिभूति M1. Ad. |
| " | " | भूयः G1. Ad. |
| " | २० | विगलत् Ad. |
| " | " | विलसत् P. Ad. |
| ४० | १ | स्वकारणनिराकृत्या Ad. |
| " | " | कल्पनम् Ad. |
| " | ८ | तारुण्यच्छाय Ad. |
| " | १० | समासरूप Ad. |
| " | " | उक्तिः संक्षिप्तरूपत्वात् M1. Ad. |
| " | ११ | इत्यस्या Ad. |
| " | १२ | यदाकलयसे Ad. |
| " | १५ | चिन्तमपाकुरु Ad. |
| " | " | चिन्तां पराकुरु चिबुकं चिराय u. Ad. |
| ४१ | | आकल्परमणी G1. Ad. |
| " | ८ | व्यञ्जकं चापि Ad. |
| " | " | ज्ञापकं A. Ad. |
| " | " | कारकं व्यञ्जकं चापि M1., M2. Ad. |
| " | १६ | मूर्ता Ad. |
| ४२ | १ | लक्ष्यार्थसौक्ष्म्य Ad. |
| " | " | नृपो मतो यथा Ad. |
| ४३ | १ | प्रियतरालापैः M2. Ad. |
| " | २ | agree with P. Ad. the Poona Ms. omits this |

| Page | Line | |
|---|---|---|
| | | [redacted] [redacted] gives the stanza मलयपवनमन्द a example. Fn. Ad. |
| " | ४ | रसौघभूतो रसवह्लने रसवद्यथा M1. Ad. |
| " | ५ | agrees with P. |
| " | ६ | विलास Ad. |
| " | १०, ११ | Ad. omits the stanza P. Ad. reads the same. |
| " | २० | तद्दोणिकान्तस्पृशि M2. Ad. |
| ४४ | १ | संखी P., u. Ad. |
| " | ६ | [redacted] Ad. |
| " | १० | संक्रान्तप्रति Ad. |
| " | १२ | [redacted] Ad. |
| " | १८ | भारा Ad. |
| " | २० | मानसगत Ad. |
| " | " | तद्दीटिका P. Ad. |
| ४५ | १ | यत्र Ad. |
| " | ३ | [redacted] M1. Ad. |
| " | ४ | [redacted] सैन्यमवला: G1. Ad. |
| " | ७ | गुणै: Ad. |
| " | १० | पाला Ad. |
| " | " | स्मृतिम् u. Ad. |
| " | १३ | पदार्थैः Ad. |
| " | " | विस्त्रोर्थः [redacted] Ad. |
| " | " | प्रतीयते M2. Ad. |
| " | १५ | दलेक्षणे M1. Ad. |
| " | २० | कल्लोला [redacted] G1. Ad. |
| " | २१ | यथा Ad. |
| ४६ | ३ | वीरता [redacted] P. Ad. |
| " | ५ | यदा Ad. |
| " | " | [redacted] P. |
| " | ८ | गुरुत्वं Ad. |
| " | ११ | साधुभिः Ad. |
| " | " | धीमता P. G1. Ad. |
| " | १२ | स्पृशतापि G1. Ad. |
| " | १३ | [redacted] Ad. |

| Page | Line | |
|---|---|---|
| " | १४-१८ | differently read by Ad. by reversing the pādas. |
| " | १५ | as found in G1. Ad. but omit in T. |
| " | " | दीर्घायते मम श्वासैरिमाः संप्रति रात्रयः ॥ G1. Ad. |
| " | १७ | कम्बोजाः Ad. |
| " | १८ | गजालानपरिक्लिष्टैः A1. Ad. |
| " | " | प्राप्तैः सह कालागरुद्रुमैः M2. Ad. |
| ४७ | ३ | स्फुरल्ललाटः Ad. |
| " | ४ | सदैवास्तु Ad. |
| " | ५ | नामः Ad. नः Ad. |
| " | " | [illegible] P. Ad. |
| " | ६ | कोपात् Ad. |
| " | ८ | विभिन्नासि Ad. |
| " | " | विलग्नासि A1. Ad. |
| " | " | विलूनासि u. Ad. |
| " | ९ | कथ्यते सङ्करो यथा Ad. |
| " | " | सङ्करः कथ्यते u. Ad. |
| " | १० | मुखाम्बुजम् Ad. |
| " | ११ | After this pāda Ad. reads अलङ्कारप्रभेदानामनेकत्वात्पृथक् पृथक्। fully omit in T. |
| " | १२ | विस्मृतिः A1. Ad. |
| " | १४ | कणादसुगतौ Ad. |
| ४८ | ८ | प्रणदितालिनि शीते Ad. |
| " | " | प्रमुदिता P. Ad. |
| " | १४ | लुलित Ad. |
| " | " | चूर्णनागदलपूगसंकुलं G1. Ad. |
| ४९ | १२ | योऽर्थः Ad. |
| ५० | ५ | मतिः u. Ad. |
| " | १४ | [illegible] Ad. |
| " | २१ | प्रवादपारंपर्यं [illegible] यदनिर्दिष्टवक्तृकम् u. Ad. |
| ५१ | ४ | निविशन्ते u. Ad. |
| " | ५ | नन्दा Ad. |
| " | " | कृतिमच्छवर्णा G1. |
| " | ६ | मन्न Ad. |

| Page | Line | |
|---|---|---|
| ,, | [illegible] | श्रमदम् Ad. |
| ,, | ,, | योगिप्रवर Ad. |
| ,, | ,, | सर्वालङ्कारसंग्रहे u. Ad. |
| ५२ | ५ | यथा Ad. |
| ,, | ९ | सदा Ad. |
| ,, | ,, | कदा A. Ad. |
| ,, | १४ | हन्ति स्तु Ad. |
| ,, | ,, | हन्तीति A2. Ad. |
| ,, | १६ | पाण्डुर Ad. |
| ५३ | १ | याच्यर्थे A., G1. Ad. |
| ,, | ६ | न च द्विषादर: P. Ad. |
| ,, | ९ | स्वदेहार्थे P. Ad. |
| ,, | ११ | चतु ही Ad. |
| ,, | ,, | तु वैही P. Ad. |
| ,, | १३ | कार: A2. Ad. |
| ,, | ,, | सर्वदैव P. Ad. |
| ,, | १४ | तोऽसौ Ad. |
| ,, | ,, | ऽथवा |
| ,, | १७ | द्योतकत्वात् व्यङ्ग A., P. Ad. |
| ,, | ,, | मता Ad. |
| ,, | १९ | प्रेयान् केसर M1. Ad. |
| ,, | २१ | पदानति Ad. |
| ,, | ,, | तेनाभावत् Ad. |
| ५४ | ४ | किं करोत्वेष Ad. |
| ,, | ७ | ताराव्रतां Ad. |
| ,, | ,, | तारालितां P. Ad. |
| ,, | १२ | गुह्याङ्ग Ad. |
| ,, | ,, | गोप्याङ्ग P. |
| ,, | १३ | मूलार्थ Ad. |
| ,, | २० | यशस्विनो Ad. |
| ,, | २१ | व्यनवत्यर्थं u. Ad. |
| ५५ | २ | सांपराय जयश्रिपा Ad. |
| ,, | ,, | राये जयश्रिपा A. Ad. |

| Page | Line | |
|---|---|---|
| ” | ११ | त्वस्तां Ad. |
| ” | १२ | पुनः पुनः Ad. |
| ” | ” | मुहुर्मुहुः A., P. Ad. |
| ” | १४ | द्वितीयमौर्वीमिव Ad. |
| ” | १५ | द्वितीयता Ad. |
| ” | १७ | चेष्टितम् Ad. |
| ” | २० | विरुद्धोऽर्थः Ad. |
| ५६ | [redacted] | [redacted] Ad. |
| ” | ” | प्रसिद्धार्थ P. Ad. |
| ” | २ | ज्योत्स्ना दलिता Ad. |
| ” | ” | कलिता A. Ad. |
| ” | ५ | योगं Ad. |
| ” | ” | योग्यं A. Ad. |
| ” | १० | T. omits |
| ” | ” | “किमुच्यतेऽस्यभूपाल मौलिमाला महामणेः। सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते” ।वच;शब्देन गीः शब्दो लक्ष्यतेऽत्रेत्यवाचकम्॥ but found in Ad. |
| ” | १४ | मल्ली Ad. |
| ” | १६ | कर्त्रगामित्वात् A2. Ad. |
| ” | १८ | [redacted] Ad. |
| ” | ” | कीलनेन P., A. Ad. |
| ” | १९ | मूर्जि Ad. |
| ५७ | ६ | चरड्वात्र Ad. |
| ” | ७, ८, ९ | omit Ad. |
| ” | १४ | परर्थे Ad. पदार्थे u. Ad. |
| ” | १५ | मताः omit by A2. Ad. and also T. |
| ” | १६ | यथा Ad. |
| ५८ | ५ | दोषास्ते [redacted] Ad. |
| ” | ८ | ते [redacted] Ad. |
| ” | ” | थी दोर्बले P. Ad. तेजो [redacted] A2. Ad. |
| ” | १० | दोषो Ad. |
| ” | ११ | चारु Ad. |
| ” | १३ | उपात्त Ad. |

| Page | Line | |
|---|---|---|
| " | " | उदात्त A2. Ad. |
| " | १४ | धृतमुक्ता Ad. |
| " | १६ | भ्यस्यतो Ad. |
| " | १७ | क्रमते Ad. |
| " | १९ | सर्वर्तौ तर्वाली P. Ad. |
| " | " | मर्वर्तौ Ad. |
| " | २० | नात्रर्जु युज्यते Ad. |
| ५९ | ९ | घन Ad. |
| " | १५ | नाद्यापि कलुषम् M1. Ad. |
| " | २० | युक्तः Ad. |
| ६० | ३ | अधिमृदुकरतल्पं M1. Ad. |
| " | ४ | गण्डपालिः Ad. |
| " | १३ | क्रियते Ad. कुरुते u. Ad. |
| " | १५ | [illegible] Ad. |
| " | १९ | पादान्त्ये Ad. |
| ६१ | ४ | शिक्षिता वीक्षिता च Ad. |
| " | १३ | भहित Ad. |
| " | २१ | कपोलच्छदम् Ad. |
| ६२ | २ | नः Ad. |
| " | ११ | गृहाणैनम् P. Ad. |
| " | १५ | वाक्यैकस्य Ad. |
| " | १९ | हत Ad. |
| ६३ | २ | पूर्वः पुरः Ad. |
| " | " | अभूतपूर्वोदयः M2. Ad. |
| " | ३ | [illegible] शब्दविशेषे न Ad. |
| " | " | स्तमिह A1., P. Ad. |
| " | ५ | [illegible] Ad. |
| " | ९ | समस्ति Ad. |
| " | १७ | विहतः Ad. |
| " | १९ | नः P. Ad. |
| " | २१ | परार्थे Ad. |
| ६४ | १ | [illegible] A2. Ad. |
| " | ४ | [illegible] G3. Ad. |

| Page | Line | |
|---|---|---|
| ,, | ८ | मुरवेन Ad. |
| ,, | १० | अप्रस्तुतमतिं M1. Ad. |
| ,, | ११ | तमालश्यामलाकारं M2. Ad. |
| ,, | १२ | तल्लक्ष्मोपयोगि स्यात् P. Ad. |
| ,, | १६ | विशेषसामान्यपरिवृत्ता: u. G3. Ad. |
| ,, | १७ | विरुद्धौ त्यक्तपुनः Ad. |
| ६५ | ९ | जवात् Ad. |
| ,, | ,, | हठात् A2., G3. Ad. |
| ,, | १६ | यार्थो यत्र द्विरुक्तः स्यात् P. Ad. |
| ,, | २० | रणधुरं P. Ad. |
| ६६ | १ | प्रदानप्रचितोत्सव M2. Ad. |
| ,, | ९ | इदं ब्रुवन्तु M1. Ad. |
| ,, | १७ | त्वमपि Ad. |
| ,, | २२ | धियम् Ad. |
| ,, | ,, | धिया P. Ad. |
| ६७ | १ | तद्दुस्साधं कलय Ad. |
| ,, | ,, | इदं तद् दुःसाध क्रमणपरमास्त्रं M2. Ad. |
| ,, | १५ | नाराटष्टिहिभः पटुर्यत्र Ad. |
| ,, | ,, | वाचाटष्टिटिभो यत्र P., u., G3. Ad. |
| ,, | १७ | नैव कार्यतः A1. u. Ad. |
| ,, | १८ | तत् A1., P. Ad. |
| ६८ | ३ | स्मितम् Ad. |
| ,, | ,, | श्रियम् P. Ad. |
| ,, | ४ | क्षणेन Ad. |
| ,, | ६ | योक्तिर्विशिष्यते Ad. |
| ,, | ,, | ज्योत्स्नीति हि A. Ad. |
| ,, | ९ | मकराकर Ad. |
| ,, | १० | भवतो विहितं Ad. |
| ,, | ११ | यत्र प्रसारित Ad. |
| ,, | १६ | त्वरयोद्घाट्यतामिति Ad. |
| ,, | १९ | विरोधः स्वोक्त्योर्यथा M2. Ad. |
| ,, | २१ | त्यक्तोऽपि Ad. |
| ६९ | १ | मधुपश्रेणिशरण M1. Ad. |

| Page | Line | |
|---|---|---|
| " | [illegible] | [illegible] यथा Ad. |
| | [illegible] | [illegible] मतः स यथा P. Ad. |
| " | ८ | यथा Ad. |
| " | " | यथास्य A1. Ad. |
| " | " | यथा संजायते P. Ad. |
| " | " | तदा Ad. |
| " | " | तथा A1., P. Ad. |
| " | ९ | जायते हि Ad. |
| " | " | मेहतिर्हि u., G3 Ad. |
| " | १६ | भिन्न Ad. |
| ७० | २ | समरंस्त Ad |
| " | ५ | वाक्यत्वात्र P. Ad. |
| " | ६ | ह्यर्थ Ad. |
| " | [illegible] | दूषिताः Ad. |
| " | ९ | भक्षयित्वार्कपत्राणि Ad. |
| " | १५, १६ | Ad. reverses he pādas. |
| " | १६ | क्लिष्ट Ad. |
| " | १७ | निरर्थकमदुष्टं Ad. |
| " | " | वाक्ये Ad. |
| " | २१ | क्लेदिनि Ad. |
| " | " | रकृमेः Ad. |
| " | " | रक्रिमे A., G3. Ad. |
| ७१ | २ | मप्यदुष्टं Ad. |
| " | ८, ९, १० | Ad omits the lines. |
| " | ११ | रोगोद्गमा Ad. |
| " | १२ | प्रदेशाम्बरा A., G3. Ad. |
| " | १६ | यद्रञ्जना Ad. |
| ७२ | १ | सत्त्व Ad. |
| " | " | अहो धैर्यमहोशौर्यं M2. Ad. |
| " | २ | हरिचन्द्रस्य P., u. Ad. |
| " | १३ | मृग Ad. |
| " | १४ | अपि का क्षतिः P. Ad. |
| " | १५ | किमनिशं Ad. |

| Page | Line | |
|---|---|---|
| ,, | १६ | वासरवध: u. G3. Ad. |
| ,, | १७ | न दुष्यति Ad. |
| ,, | १९ | लुठत्ययमयं Ad. |
| ७३ | ३ | सिद्धौ चापि Ad. |
| ,, | ,, | सिद्धा मा च M2. Ad. |
| ,, | ५ | कथाद्भुतमिदं Ad. |
| ,, | ,, | यत्रैव G3. Ad. |
| ,, | २२ | नोज्जृम्भते Ad. |
| ७४ | १ | निर्हेतुकथनं Ad. |
| ,, | ४ | वाटीतटित्वतां u. Ad |
| ,, | ७ | विन्दादि Ad. |
| ,, | ८ | भ्रमरा: काण्ड Ad. |
| ,, | ११ | कर्णावतंसश्च Ad. |
| ,, | ,, | शेखरं Ad. |
| ,, | १५ | निर्मितसूक्त्ये P. Ad. |
| ,, | १९ | व्याप्ति Ad. |
| ,, | २१ | विस्मृति: u. Ad. |
| ७५ | १ | दृश: Ad. |
| ,, | ४ | मखमुखे Ad. |
| ,, | ५ | सुलभ्रे Ad. |
| ,, | ७ | क्रापिचिचप Ad. |
| ,, | ,, | न लक्ष्यते Ad. |
| ,, | १० | क्षणं Ad. |
| ,, | १३ | मप्यनौ Ad. |
| ,, | १६ | मैत्री Ad. |
| ,, | १९ | वेक्ष्यताम् Ad. |
| ७६ | २ | रामरूपाम् Ad. |
| ,, | ३ | मभिसृत्य Ad. |
| ,, | ५ | ग्रहणाच्छूकरोति हि दुष्यति Ad. |
| ,, | १२ | स्तात्र Ad. |
| ,, | १५ | स्खलतितरां Ad. |
| ७७ | १ | मिव Ad. |
| ,, | ११ | श्रीमद Ad. |

| Page | Line | |
|---|---|---|
| | | योगिप्रवर Ad. |
| " | " | सर्वालङ्कारसंग्रहे A. Ad. |
| ७८ | ४ | दृश्यते Ad. |
| " | " | रस्यते G3. Ad. |
| " | ७ | तत्समारोपादाहुः पात्रं रसाश्रयम् u. Ad. |
| " | ९ | तद्विधा Ad. |
| " | ११ | त्रिविधं तथा Ad. |
| " | " | द्विविधं त्रिधा A1. Ad. |
| " | १२ | कीर्तितम् Ad. |
| " | १७ | कार्यस्य सिद्धौ Ad. |
| " | " | कार्यप्रसिद्धौ यः u. Ad. |
| " | १९ | मधुकृतं A. Ad. |
| ७९ | ३ | विच्छेदनं यतः A1. Ad. |
| " | ७ | कथात्यर्थं Ad. |
| " | ११ | यातो Ad. |
| " | " | नयने Ad. |
| " | १५ | [illegible] Ad. |
| " | १८ | पाटलच्छवि Ad. |
| ८० | ३ | तद्यथा Ad. |
| " | ९ | रथियातव्य Ad. |
| " | " | त्वरितां Ad. |
| " | १२ | भिन्नकदरीव Ad. |
| " | " | भिन्नककरीव A1. Ad. |
| " | २० | [illegible] Ad. |

# APPENDIX IV

## विशेषपदानि

उपमानं, ४७, ४९
ऊर्जस्वी, ३७, ४३
ऐतिह्यं, ४७, ५०
ओजः, ३५, ३७
औचिती, ७
औदार्यं, २२, २३, २९, ३१
[illegible], २, ७८
कथितपदं, ५७, ६०
कथोद्घातः, ११०
कमला, १४२
करणं, ८१, ८४
करुणरसः, ९, १४

# APPENDIX V
## शुद्धिपद्द्रिका

| Page | Line | Reading |
|---|---|---|
| २ | ७ | निर्दोषा |
| " | १२ | तद्द्वयं |
| " | १६ | बहुभिर्युतम् |
| ३ | १३ | धनमूद्वयात् |
| ४ | १ | पवर्गो |
| " | ३ | दाहकृद्वयसनदो |
| " | ४ | ३० |
| ५ | ४ | भूषणार्थी |
| " | ७ | अर्थो |
| ७ | ५ | साहचर्या |
| ८ | ४ | ऽवसीयते |
| " | ५ | सुहृहादिह |
| ९ | ११ | पाकाद् धृतत्वं |
| " | १४ | सात्त्विका |
| १० | २ | सत्त्वं |
| " | ११ | तत्त्वतः |
| " | १७ | सात्त्विकाः |
| " | २० | द्यौर्मिथो |
| १३ | ५ | चूतम् । |
| " | १२ | सहिष्णुत्वं |
| १४ | १ | ऽर्पितवती |
| " | ८ | चैतावनु |
| १५ | १४ | घनास्त्र |
| " | १७ | पशुभिर्निर्मर्या |
| " | १८ | सार्ध |
| १६ | ८ | चास्तंगतम् |
| १८ | २० | सात्त्विकाः |
| १९ | — | तृतीयः परिच्छेदः |
| २२ | ६ | सहसा |
| " | १२ | श्रेष्ठ |
| " | १७ | सत्त्व |
| २३ | १ | शौर्य |
| " | २ | विलासे |

| Page | Line | Reading |
|---|---|---|
| ” | २१, २२ | “यदा ...... शिला ॥” |
| ३१ | १७ | “ज्वलतु गगने रात्राव |
| ३३ | ६ | प्रियं स्मृत्वा |
| ३९ | १ | उक्तस्यानेकधोक्तिः |
| ४१ | १९ | सुबोधं |
| ४२ | २० | त्वद द्विषो |
| ४४ | १० | प्रतिबिम्बशतैः |
| ” | २१ | मदनार्ता |
| ४५ | १२ | तिष्ठन्ति, स्वयम् |
| ” | २१ | मदनार्ता |
| ४५ | १२ | तिष्ठन्ति, स्वयम् |
| ४६ | १४, १५, १६ | |
| | १७, १८ | “दिगन्त ..... माननाः ।” |
| ” | २० | खड्गे |
| ४८ | ८ | निशीथे |
| ४९ | ३, ४ | “पराप ...... कदाचन ॥” |
| ” | १४, १५ | “निर्णेतुं .... भरस्थितिः ॥” |
| ५० | ९, १० | “कर्णोत्पलं .... नेत्रताम् ॥” |
| ५३ | १३ | संप्रति |
| ” | १४ | गत्यर्थोऽप्यसमर्थो |
| ५४ | ६ | सुमहद्यस्य |
| ” | २२ | व्यनक्त्युक्तं |
| ५६ | २ | सम्यग् ज्ञान |
| ५७ | ३ | प्रेतेत्यमङ्गला |
| ५८ | ८ | अतितरे |
| ५९ | ७ | सहकारस्य |
| ” | ९ | आदित्यस्य |
| ” | १२ | तनयां |
| ६२ | १९ | प्रसिद्धिहतं |
| ६३ | २० | भग्नः |
| ६४ | १० | मेतद्यात्रा |
| ” | १४ | अर्थो |
| ६७ | १८ | सम्भवाद्दूषणं |

| | | |
|---|---|---|
| ६८ | ११ | याचनाप्रसारित |
| ७२ | ४ | सेयं |
| ७४ | ४ | चन्द्रचन्दन |
| ७६ | १२ | स्थायिनोत्र |
| ७७ | ५ | इत्यादि रस |
| ८७ | १७ | नितान्तनिष्ठुरं |
| ९४ | २० | शोकं |
| ११० | १ | घनकालमुग्र |
| ११८ | १ | "गायति गेयं |
| १३९ | ६ | साहाय्य |
| १४१ | १४ | शङ्करी |
| १४३ | ६ | भिन्नैर्वर्णैः |
| १४४ | १३ | वाहनारोह |
| १४५ | १० | श्लोकावाद्यन्त |
| १४६ | ७ | सर्वे |

